# भारती

संस्कृत-मासपत्रिकाया

श्री बद्रीनाथः

श्री द्वारका

जगन्नाथः



वर्षम् ३२

आषाढ़

अङ्क ६

जुलाई

१९८२




हरिर्मत्स्यस्वरूपो यो
वेदानुदधरत् पुरा ।
स एव साम्प्रतं वेद-
व्यासरूपः प्रणम्यताम् ॥
—श्रीरामगोपालशास्त्री, जयपुरम्

वार्षिकमूल्यम् पञ्चदशमुद्राः १५.००
एकप्रतेः—सार्धकं रूप्यकम् १.५०



CC-0. Sri Radha Krishna Samsthan: Delhi. Digitized by eGangotri

राजस्थान-मध्यप्रदेश-गुजरात-महाराष्ट्र-मद्रास-आन्ध्र-उत्तरप्रदेश-
बिहार-पञ्चनद-सर्वकारैः स्वीकृता

# विषय-सूची





CC-0. Sri Radha Krishna Samsthan, Delhi. Digitized by eGangotri



प्रधानसंरक्षकाः—
जगद्गुरुशङ्कराचार्य-
स्वामिश्रीजयेन्द्रसरस्वतीमहाभागाः
कांचीकामकोटिपीठाधिपतयः



संस्थापकः
स्व. श्री उमाकान्तकेशव
आप्टे
(बाबा साहब आप्टे)

प्रधान सम्पादकः
जगदीशशर्मा
साहित्याचार्यः
सहसम्पादकः
रामगोपालशास्त्री जयपुरम्



लेखैरुपष्टुता याऽऽस्ते भारतीव सितच्छदा
भारती भारतीयानां भासतां भवनेष्वलम्

संरक्षकः
श्रीदेवीशङ्करतिवाड़ी
जयपुरम्
प्रबन्ध-सम्पादकः
श्रीगिरिराजशर्मा
भारती-भवनम्
बी १५, न्यू कालोनी
जयपुरम्-१
(राजस्थानम्)

वर्षम् ३२ | आषाढः, विक्रमाब्दः, २०३९ [ जुलाईः, १९८२ ] | अङ्कः ९

## मङ्गलम्

सौदामिनी-द्युति-सुदीप्त-वने सुरम्ये
श्यामाम्बुदाम्बु-परिषिञ्चित-शाद्वलेऽस्मिन् ।।
कुञ्जेषु कीर्तिसुतया सह मोदमानौ
श्रीमन्मुकुन्द-चरणौ शरणं प्रपद्ये ।।२५।।

## मासावतरणम्

सन्तापं शमयन् भुवस्तलभवं मेघाम्बुभिः, सन्ततं
सन्तापं च पुनस्तथा विरहिणां संवर्द्धयन् मानसे ।
राधामाधव-पादपद्म-मधुलिट्-सन्दोहमानन्दयन्
आयात्येष गुरोः पदम्बुजरतो ह्याषाढ़मासः शुभः ।।

—श्रीरामगोपालशास्त्री, जयपुरम्

CC-0. Sri Radha Krishna Samsthan, Delhi. Digitized by eGangotri

अनन्तश्रीविभूषितानां श्रीमत्परमहंसपरिव्राजकाचार्यवर्याणां, यमनियमाद्यष्टांग-
योगप्रवणानां वेदान्तन्यायादिषड्दर्शनपारंगतानां, तपःपूतजन्मनां, अगाध-
विद्याविद्योतितान्तःकरणानां भगवच्चन्द्रमौलिपादारविन्दमधुव्रतानां
श्रीमदादिशंकराचार्यप्रथमप्रतिष्ठापितशृंगेरीपीठाभिषिक्तानां

श्रीमतां अभिनवविद्यातीर्थमहासन्निधानमहाभागानां करकमल-
योर्मिलिन्दायतां सुरभारतीपीयूषसारसरसमभिनन्दनपत्रमिदम्



**जगद्गुरो !**

महतः सौभाग्यस्यायमवसरः यदद्य महाराजाधिराजसवाईश्रीजयसिंहदेवप्रतिष्ठापिते विविधविद्याकलाविलासभासुरेऽस्मिन् जयपुरनगरे तत्रापि अहमहमिकया जयनगरजनतासमाराधितविग्रहे राधिकामिलद्रासोल्लासचन्दिरे भगवद् गोविन्ददेवमन्दिरे, विविधकुसुमलतावितानसुरभितोल्लासबन्धुरे जयविलासोद्यानप्राङ्गणे तत्रभवतां श्रीमतां आचार्यचरणानां स्वागतं व्याहरन्तो वयमिह कमप्यननुभूतपूर्वं आनन्दोल्लाससन्दोहमनुभवामः ।

**आचार्यचूडामणे !**

प्रातःस्मरणीयैः शंकरावतारैः भगवच्छंकराचार्यचरणैः केरलप्रदेशे 'कालडी' नामके ग्रामे प्रादुर्भूय, बाल्ये वयस्येव गृहीतसंन्यासैः पुण्यसलिलाया नर्मदायास्तटे स्वदेशिकसत्तमस्य भगवद्गोविन्दपादस्यानुकम्पाभरेण मान्त्रिकीं दीक्षां समवाप्य गौरीगुरोर्भगवतोविश्वनाथस्य पुरी काशी खलु सनाथीकृता । काश्यां चाधितिष्ठता अनेन लोकोत्तरप्रभावेण महापुरुषेण ब्रह्मसूत्राणां, श्रीमत्याः भगवद्गीतायाः, तथैव ईशावास्यप्रभृतिप्रमुखोपनिषदां वेदार्थानुगतां भाष्यरचनां विधाय पुण्यतीर्थस्य बदरिकाश्रमस्य यात्रा कृता । तत्र तपश्चर्यामाचरता भगवतो बदरीनाथस्य प्रतिमां प्रतिष्ठाप्य तस्यार्चनादिव्यवस्थां शास्त्रमर्यादया निश्चितां कृत्वा आसेतुहिमाचलं भारतभ्रमणं चकार । अनेन च तीर्थयात्राप्रसङ्गेन सोऽयं महाभागः द्वादशसंख्याकानां ज्योतिर्लिङ्गानां तत्र तत्र सभाजनमाचरन् अद्वैतवेदान्तदर्शनस्य सुदृढीकरणाय तत्रतत्रोद्दिष्टेषु भूभागेषु चतुर्णां पीठानां स्थापनां विहितवान् ।

CC-0. Sri Radha Krishna Samsthan, Delhi. Digitized by eGangotri

**वैदिकसंस्कृतिसंरक्षणजागरूकमते !**

शृङ्गेरिपीठप्रतिष्ठितानां आचार्यश्रीचन्द्रशेखरभारतीस्वामिनामन्तेवासित्वमुपगम्य श्रीमद्भिः श्रीअभिनवविद्यातीर्थमहासन्निधानेति सुगृहीतं नामधेयं बिभ्रद्भिः, समस्तस्य च भारतदेशस्य धर्मयात्रां कुर्वाणैः भारतीया जनता स्वकीयैरुपदेशवचनामृतैः बहुशः कृतार्थीकृता । शतासन्नैः वैदिकधर्मप्रचारकेन्द्रैः, संस्कृतवाङ्मयसमाराधनाय अत्युन्नतै विद्याकेन्द्रैः तथा साधनसम्पन्नैः स्वास्थ्यसेवाकेन्द्रैश्च सेयं भारतभूमिः बहुधोपकृतेति तत्रभवतां जनसेवाव्रतं स्मारं स्मारमतितरां प्रसीदत्यन्तरात्मा ।



अत्रैदमपि आनुषङ्गिकं स्मरणीयञ्चेतिवृत्तं भवतां पुरतो निवेदनीयमास्ते यत् त्रिशतवर्षेभ्य इदं जयपुरनगरं प्राच्यविद्याकलानां विश्वविश्रुता विलासभूमिरिव गुणगौरवेण सुप्रतिष्ठितमभूत् । सांप्रतमपि तदिदं सुरसरस्वतीसेवाहेवाकितया धर्म-साहित्य-सेवां पुरस्कुर्वाणः यथापूर्वं जागर्ति । अतएव चेदं जयपुरनगरं द्वितीया काशीति नाम्ना लोके प्रतिष्ठां दधदद्यापि तं पूर्वानुगतं गौरवं यथायथं विभर्त्ति ।

अन्ते च, परमाराध्यस्य भगवतः चन्द्रमौलेरिदं भूयो भूयः कामयामहे यत् सोऽयं भगवान् भूतभावनः तत्र भवतां श्रीमतां दीर्घायुष्यं शरीरारोग्यं च विदधानः देशसेवायै भवन्तं निरन्तरं सन्नद्धं समुद्योगभरितं च विदध्यादिति शिवम् ।

वयमेते भावत्काः—

जयपुर-नगरीय-सुरभारतीसमाराधनतत्पराः विद्वांसः

CC-0. Sri Radha Krishna Samsthan, Delhi. Digitized by eGangotri




एकोऽहं बहुस्याम् प्रजायेयेति सिसृक्षासमकालमेव विश्वसृजाऽदिनिधनेन स्थावरजङ्गमात्मकसर्गप्रक्रिया विचित्रा विस्मयकरी सर्वेषामारब्धा। करणाकरणान्यथाकरणसामर्थ्यशालिना लोकहितकाम्ययाऽधर्मनिरसनपुरस्सरं धर्मप्रसारप्रचारकामनया स्वकीयावतरणप्रक्रियाऽपि सर्वभूतात्मतामात्मन आविष्कर्तुं यत्र कुत्रापि येन केनापि प्रकारेण प्रदर्शिता। कालकृतबलबुद्ध्यादिसर्वविधह्रासमभिवीक्ष्य चतुर्विंशत्यवतारेषु सप्तदशोऽवतारः पञ्चकलोद्भवो विष्णोर्वैवस्वतमन्वन्तरस्याष्टादशशततमे युगपर्यये द्वापरान्ते प्रतिजीवं धर्मज्ञानभक्तिसंचाराय प्रादुर्भूतो व्यासनाम्ना। तथा च भागवते—

ततः सप्तदशे जातः सत्यवत्यां पराशरात्।
चक्रे वेदतरोः शाखा दृष्ट्वा पुंसोऽल्पमेधसः॥
—भा० स्कं. १ अध्याय ३ श्लोक २१

द्वापरे समनुप्राप्ते तृतीये युगपर्यये।
जातः पराशराद्योगी वासव्यां कलया हरेः।
—भा० स्कं. १ अ० ४ श्लोक १४

एतेन व्यासो भगवतो विष्णोरावेशावतार—इति प्रतीयते।

मन्दमतीनश्रद्दधानानल्पायुषो भाग्यहीनानधीरानवलोक्य जनान् सर्ववर्णाश्रमाणां हितमपरोक्षज्ञानेन चिन्तयित्वा मुनिश्चातुर्होत्रं वैदिकं कर्म वैदिकधर्माचरणशीलानां प्रजानां शुद्धिकरं रागविवर्जितं वा निरीक्ष्याविभक्तमेकं वेदं यज्ञपरम्पराप्रवर्तनाय ऋक्यजुःसामाथर्ववेदेन चातुर्विध्येन व्यभाङ्क्षीदतएव च वेदव्यास संज्ञयाऽपि व्यासोऽयं पप्रथे। व्यासशब्दनिरुक्तिरस्योपोद्वलिका महाभारते यथा १.१०५.१४—

यो व्यस्य वेदान् चतुरस्तपसा भगवानृषिः।
लोके कृष्णत्वमापेदे कार्ष्ण्यात्कृष्णत्वमेव च॥
तत्राप्यनेकधा वेदान् भेत्स्यते तपसान्वितः।
कृष्णे युगे च संप्राप्ते कृष्णवर्णो भविष्यति॥
( महाभारत—मोक्षधर्म पर्व )

शब्दिकाश्चैवं व्युत्पादयन्ति व्यासशब्दं 'व्यस्यति वेदं पृथक्करोतीति व्यासः।' विष्णुपुराणेऽपि निगदितोऽयमर्थः—

वेदमेकं चतुर्भेदं कृत्वा शाखाशतैर्विभुः।
करोति बहुलं भूयो वेदव्यासस्य रूपधृक्॥
द्वापरे तु युगे विष्णुर्व्यासरूपी महामुने।
वेदमेकं सुबहुधा कुरुते जगतो हितः॥
वीर्यं तेजो बलं चाल्पं मनुष्याणामवेक्ष्य च।
हिताय सर्वभूतानां वेदभेदं करोति सः॥
यया च कुरुते तन्वा वेदमेकं पृथक्प्रभुः।
वेदव्यासाभिधाना नु सा सा मूर्त्तिर्मधुद्विषः॥

CC-0. Sri Radha Krishna Samsthan, Delhi. Digitized by eGangotri

विष्णुव्यासयोरभेद एवेति निरूपितमन्यत्र—

व्यासाय विष्णुरूपाय व्यासरूपाय विष्णवे ।
नमो वै ब्रह्मविधये वासिष्ठाय नमो नमः ।।

वेदविभागहेतुश्च ब्रह्मवैवर्तपुराणस्य प्रकृतिखण्डाष्टमाध्याये चेत्थं निरूपितः—

यः सत्पुराणसूत्रं पप्रच्छ वाल्मिकं यदा ।
मौनीभूतः स सस्मार त्वामेव जगदम्बिकाम् ।।
तथा चकार सिद्धान्तं त्वद्वरेण मुनीश्वरः ।
सम्प्राप्य निर्मलं ज्ञानं भ्रमान्धध्वंसदीपकम् ।।
पुराणसूत्रं श्रुत्वा स व्यासः पञ्च कलोद्भवः ।
त्वां सिषेवे प्रदध्यौ च शतवर्षञ्च पुष्करे ।।
तदा त्वत्तो वरं प्राप्य स कवीन्द्रो बभूव ह ।
तदा वेदविभागं च पुराणं च चकार ह ।।

अस्य व्यासस्याभिधान्तरमहिर्बुध्न्यसंहितायां महाभारते च 'अपान्तरतमाः' इत्यपि दृश्यते । परं शंकराचार्यपादैर्ब्रह्मसूत्रभाष्ये प्राचीनयुगे –वेदाचार्यस्यापान्तरतमसो द्वापरकलियुगयोरन्तराले कृष्णद्वैपायनत्वेनोद्भूतिर्निगदिता । वैवस्वतमन्वन्तरेऽस्मिन्नष्टाविंशतिद्वापरयुगानि व्यतीतानि । अष्टाविंशतितमेऽस्मिन् कलियुगे अष्टाविंशोऽयं व्यासः । विष्णुपुराणनिर्दिष्टाष्टाविंशतिव्यासेष्वस्यपरम्परासौ—

ऋक्षोऽभूद् भार्गवस्तस्माद् वाल्मीकिर्योऽभिधीयते ।
तस्मादस्मत्पिताशक्तिर्व्यासस्तस्मादहं मुने ।।
जातुकर्ण्योऽभवन्मत्तः कृष्णद्वैपायनस्ततः ।
अष्टाविंशतिरित्येते वेदव्यासाः पुरातनाः ।।
एको वेदश्चतुर्धा तु तैः कृतो द्वापरादिषु ।
भविष्ये द्वापरे चापि द्रोणिर्व्यासो भविष्यति ।।
व्यतीते मम पुत्रेऽस्मिन् कृष्णद्वैपायने मुने ।

द्वैपायन इत्यपि संज्ञान्तरं तस्येदं कारणम् चेदिदेशाधिपतिर्वसुनामको राजा शक्रसेवया व्योमयानमासाद्योपरितनलोकेषु चरंस्तेनोपरिचरवसुसंज्ञया प्रसिद्धः । कदाचनपितुराज्ञया मृगयार्थं गतो गिरिकाभिधामात्मनः स्त्रीमृतुस्नातां स्मृत्वा तदीयलावण्यस्मरणेन स्खलितरेता वटपर्णपुटे रेतो निक्षिप्य श्येनाय समर्प्य स्वभार्यायै प्रेषयामास । पथि यान्तं तमन्यः श्येनोऽवलोक्य मांसभ्रमेण तेनायुध्यत । ततःसलिलेऽघमर्षणं जपता केनचन मुनिनात्तशापाद्रिकःख्यात्सरा मत्स्यीभूता यमुनापतितं तद्वीर्यं निजगाल । रेतोनिगरणसञ्जातगर्भा सा केनापि धीवरेण मत्स्यजीविना गृहीताऽर्पिता च तद्देशाधिपाय राज्ञे । विदारितोदरायास्तस्याः द्वन्द्वं गर्भाद्बहिरपतत् । यश्च बालकः स तु तेन राज्ञा गृहीतो मत्स्यनामको राजाऽभूत् । या च कन्या सा कैवर्तेन गृहीता वासवी, काली मत्स्योदरीति नामभिः प्रथिता । मत्सी तु देहान्ते स्वर्गता । धीवरो वासवीं पालयामास । अथ कदाचन तीर्थयात्राप्रसङ्गेन तत्रायातः पराशरो मुनिस्तं दाशमुवाच मां शीघ्रं पारन्नय । भोजनं कुर्वन् स स्वपुत्रीभूतां तां वासवीं मुनिं पारं प्रापयितुमुडुपेन समादिशत् । पिताज्ञया सा तथा कृतवती । अतीवसौन्दर्यसम्पन्नां तामवेक्ष्य मदनातुरो मुनिः सुरतं ययाचे, सा च

CC-0. Sri Radha Krishna Samsthan, Delhi. Digitized by eGangotri

भवद्विधानामृषीणामनुरूपं नैतत्कर्मेति नैकशस्तं बोधयामास। अन्यच्च दुर्गन्धाहं, कन्याहं, लोकः पिता देवाश्च विलोकयन्तीत्यादिब्रुवाणामपि तां स प्रसह्य सम्बुभुजे। वरञ्च दत्तवान्योजनगन्धा भविष्यसि । पुत्रस्ते विष्णोरंशः पुराणाचार्यो भविष्यतीत्युक्त्वा स्नात्वा च पराशरस्तु स्वाश्रममगच्छत्। सा च तत्कालमेव धृतगर्भा कर्णत एव वीर्यग्रहणात्कर्णत एव पुत्रं प्रसूय द्वीपे स्थापयित्वा यमुनायाः कञ्चित्कालं पालयामास। अतोऽस्य द्वैपायननाम जातम्। अयं मातरमापृच्छ्य ततः स्वपितरमवधार्य कार्यकाले स्मरणादेव तव पार्श्वमागमिष्यामीति प्रोच्य पितुराश्रमं जगाम। तथा हि महाभारते १।६३। ८३-८५

**इति सत्यवती हृष्टा लब्ध्वा वरमनुत्तमम् ।**
**पराशरेण संयुक्ता सद्यो गर्भं सुषाव सा ॥**
**जज्ञे च यमुनाद्वीपे पाराशर्यः स वीर्यवान् ।**
**स मातरमनुज्ञाप्य तपस्येव मनो दधे ॥**
**स्मृतोऽहं दर्शयिष्यामि कृत्येष्विति च सोऽब्रवीत् ।**
**एवं द्वैपायनो जज्ञे सत्यवत्यां पराशरात् ॥**
**न्यस्तो द्वीपे स यद् बालस्तस्माद् द्वैपायनः स्मृतः ।**
**सुतं त्वजनयच्छक्तेरदृश्यन्ती पराशरम् ।**
**काली पराशराज्जज्ञे कृष्णद्वैपायनं मुनिम् ॥**

अस्य कुलपरम्पराया वर्णनमेवमास्ते—

**व्यासं वसिष्ठनप्तारं शक्तेःपौत्रमकल्मषम् ।**
**पराशरात्मजं वन्दे शुकतातं तपोनिधिम् ॥**

व्युत्पत्तिरपि द्वैपायनशब्दस्य चैवम् द्विर्गता आपः यस्मिन् तत् द्वीपं, द्वीपं अयनं यस्य स द्वीपायनः द्वीपायन एव द्वैपायनः स्वार्थेऽणि साधुः। कृष्णवर्णत्वाच्च कृष्णद्वैपायन इति। कृष्णश्चासौ द्वैपायनः।

**धर्मयुक्तस्य धर्मार्थं पितुरासीत्तरी मम ।**
**सा कदाचिदहं तत्र गता प्रथमयौवने ॥**
**अथ धर्मविदां श्रेष्ठः परमर्षिः पराशरः ।**
**आजगाम तरीं धीमाँस्तरिष्यन् यमुनां नदीम् ॥**
**स तार्यमाणो यमुनां मामुपेत्याब्रवीत्तदा ।**
**सान्त्वपूर्वं मुनिश्रेष्ठः कामार्तो मधुरं वचः ॥**
**तमहं शापभीता च पितुर्भीता च भारत ।**
**वरैरसुलभैरुक्ता न प्रत्याख्यातुमुत्सहे ॥**
**अभिभूय स मां बालां तेजसा वशमानयत् ।**
**तमसा लोकमावृत्य नौगतामेव भारत ॥**
**मत्स्यगन्धो महानासीत्पुरा मम जुगुप्सितः ।**
**तमपास्य शुभं गन्धमिमं प्रादात्स मे मुनिः ॥**
**ततो मामाह स मुनि गर्भमुत्सृज्य मामकम् ।**
**द्वीपेऽस्या एव सरितः कन्यैव त्वं भविष्यसि ॥**
**पाराशर्यो महायोगी स बभूव महानृषिः ।**
**कन्या पुत्रो मम पुरा द्वैपायन इति स्मृतः ॥**

वादरायण इति नाम्नाऽपि प्रसिद्धिरस्य वदरायणे वसतीति व्युत्पत्या। सरस्वती–वदरीखण्डयोः सत्वात्सिन्धुवनस्थो वदरिकाश्रमं स्तत्रैवादिवदरिकाश्रमप्रसिद्धेः सत्वात्।

अस्य ब्रह्मविष्णुशिवात्मकता "द्विबाहुर्" वादरायणस्य वैशिष्ट्यं द्योतयति यथा—

**अचतुर्वदनो ब्रह्मा द्विबाहुरपरो हरिः ।**
**अभाललोचनः शम्भुर्भगवान्वादरायणः ॥**

CC-0. Sri Radha Krishna Samsthan, Delhi. Digitized by eGangotri

अयं हि व्यासो क्षीयमाणधर्मरक्षणायावतीर्णोऽत एव महाभारते धर्मावश्यकतां प्रदर्शयँल्लोकस्थितिं तदाश्रितामेव निगदति धर्म एव हतो हन्ति धर्मो रक्षति रक्षितः। तस्माद्धर्मो न हन्तव्यो मानो धर्मो हतोऽत्र धीत्। पुरुषार्थत्रयस्यापि प्रथमपुमर्थमूलकत्वमुच्चैर्घोषयति ऊर्ध्वबाहुर्विरौम्येष न च कश्चिच्छृणोति ये धर्मादर्थश्च कामश्च स किमर्थन्न सेव्यते। अन्यदपि धर्मो विश्वस्य जगतः प्रतिष्ठा। व्यासो जन्मत एव तपश्चरितुं गतवान् ततः स योगी यतीनांवरो महर्षि र्बभूव। ग्रामे केवलमेकरात्रं पत्तने दिनत्रयं पुरे द्विनद्वयं नगरे पञ्चरात्रं यतीनां वासो धर्मसम्मतः। चिररात्राय संन्यासिनामेकत्र वासश्चातुर्मास्यवर्जन्न प्राणिहितायं। चातुर्मास्ये यतिरेकत्रवासंकुर्याज्जीवहिंसानिवृत्तये। तथा च विश्वेश्वरीय धर्मशास्त्रम्—

**वर्षास्वेकत्र तिष्ठेत स्थाने पुण्यजनावृते।**
**आत्मदत्सर्वभूतानि पश्यन्भिक्षुश्चरेन्महीम्॥**

आरुणस्मृतिरपि-वर्षासु ध्रुवशीलस्तु माःस्वे काकी यतिश्चरेत्। द्वावेव वा चरेत्। कार्तिकान्ताश्चत्वारो मासा विवक्षिताः। द्वाविति-द्वयोर्वाश्रावणभाद्रपदयोः।

आषाढ्यां पूर्णिमायां वपनं कारयित्वा चातुर्मास्यवपनवर्जनं प्रतिश्रुत्या स्नात्वा—

**उद्भिज्जैरण्डजैर्वापि प्राणिभि र्व्याप्यते मही।**
**सूक्ष्माव्यक्तव्यक्तियुक्तै र्नानारूपैः समन्ततः॥**

**एतेषां रक्षणार्थाय आषाढ्यादिवसाद्यतः।**
**असति प्रतिबन्धे तु मासान्वै**
**वार्षिकानिह॥**

निवसामीति सङ्कल्प्य मनसा विधि पूर्वकम्। इति वाचिकं सङ्कल्प्य यतिरिमान्मन्त्रानुच्चारयेत्—

**माधवश्चतुरो मासान्सर्वभूतहिताय वै।**
**निद्रां यास्यति शेषाङ्के लक्ष्म्या सह**
**जगत्पतिः॥**

**सुप्तश्चैवोत्थितो यावन्न भवेत्स सनातनः।**
**अहं तावन्निवत्स्यामि सर्वभूतहिताय वै॥**

**इदं व्रतं मया देव गृहीतं पुरतस्तव।**
**निर्विघ्नं सिद्धिमाप्नोतु प्रसादात्ते रमापते॥**

**प्रावृट्काले तु प्रायेण प्राणिभिर्व्याप्यते मही।**
**स्थास्यामि चतुरो मासानतस्तेषां हिताय वै॥**

**स्थापयिष्यामि शेषाङ्के लक्ष्म्या सह**
**जगत्पतिम्।**
**सुप्ते त्वयि जगन्नाथे जगत्सुप्तं भवेद्भुवि॥**

**विबुद्धे च विबुध्येत प्रसन्नो मे भवाव्यय।**
**सप्तद्वीपे योगनाथे भोगीनाथे स्थिते त्वयि॥**

**चातुर्मास्यव्रतेऽनुज्ञां देहि लक्ष्मीपते मम।**
**चतुरो वार्षिकान्मासान्देवस्योत्थापनावधि॥**

इति सङ्कल्प्य मुनीनामप्यहं व्यासः, इत्युपनिषद्वाक्यं भावयन् भगवतो व्यासस्य पूजां कुर्यात्। यतिधर्मसमुच्चये—

CC-0. Sri Radha Krishna Samsthan, Delhi. Digitized by eGangotri

देवं कृष्णं मुनिं व्यासं भाष्यकारं गुरोर्गुरुम् ।
गुरुं देवगणाध्यक्षौ दुर्गां देवीं सरस्वतीम् ॥

अत्र यतीनां वरेण्यत्वाद् व्यासस्य सर्वप्रथममेवाभ्यर्चा विधेया। पूजाप्रकारश्च विस्तरभयान्नोद्ध्रियते ग्रन्थान्तरेभ्य एव ज्ञेयः। व्यासो वेदविभजनमेव नाकार्षीदपितु तद्विभागं कृत्वा वेदधर्मप्रचारार्थं चतुरः शिष्यान्पैलवैशम्पायनजमिनिसुमन्तनामधेयाँश्चतुरोवेदानध्याप्यादिशत् । तैश्च शिष्यप्रशिष्यपरम्परया गुरोरादेशमतिक्रामद्भिः शाखाप्रशाखादिभिर्धर्मप्रचारो व्यतन्यत । वेदं विभज्याष्टादशपुराणानि व्यरीरचत् । अष्टादशपुराणानां कर्ता सत्यवतीसुतः । भारताख्यानमतुलं चक्रे तदुपबृंहितम् । चरमपुरुषार्थसाधकात्मज्ञानाय "एकमेवाद्वितीयं ब्रह्म, सर्वं ब्रह्ममयं जगत्, इत्यादिश्रुतिप्रतिपादितब्रह्मावगतये ब्रह्मसूत्रन्यरूपयत्। सर्वमेतद्विरच्यापि शान्तिमलभमानोभागवतमहापुराणमपवर्गसाधनं सर्वहितानुष्ठानाय विधाय कलौ भक्तिमेव सर्वोत्कृष्टमुपायं भगवदवाप्तये न्यदर्शयत् । अतः सर्वैरस्मिन्दिने व्यासं सम्पूज्य तन्निर्दिष्टः पन्थाः समाश्रयणीयो दृढप्रतिज्ञया सह । व्यासेन च यथा धर्मरक्षा धर्मप्रचारश्च शिष्यप्रशिष्यादिभिः सर्वत्र सम्प्रापितावेवमेव सर्वैर्धर्मप्रचारः कार्यस्तदैवास्माकं भारतं पूर्ववद्गुरुताभाजनभागम्यथा तु भौतिकवादेन देशान्तरजनतया इव भारतीयानामपि शाश्वतिकी शान्तिर्दुर्लभैव ।




## भारती के कतिपय प्रकाशन

| | | |
|---|---|---|
| १. | अम्बिकासूक्तम् संस्कृत हिन्दी टीका सहित | मूल्य २.५० |
| २. | गल्पकल्पलतिका (बालोपयोगिनी) | ,, १.५० |
| ३. | गोलनवाङ्कुरः (खगोलवर्णनम्) | ,, २.०० |
| ४. | आयुर्वेदविशेषांकः | ,, ५.०० |
| ५. | आरोग्याङ्कः | ,, ५.०० |
| ६. | बालोपदेशमणिमाला (हिन्दी अनुवाद सहित) | ,, ३.०० |
| ७. | सूक्तिसुधा (हिन्दी अनुवाद सहित) | ,, २.०० |
| ८. | मातृस्तवनं (हिन्दीपद्यानुवाद सहित) | ,, २.०० |
| ९. | आध्यात्मिकशिवायनम् (हिन्दीगद्यानुवादसहित) | ,, ५.०० |
| १०. | श्रीगुरुजीस्मृत्यङ्कः | ५.०० |
| ११. | दुर्गासप्तशतीसर्वस्वम् (हिन्दीपद्यानुवाद सहित) | ,, ५.०० |
| १२. | भारतभक्तिस्तोत्रम् (हिन्दीगद्यानुवाद सहित) | ,, १०.०० |
| १३. | लघुकथासंग्रह (हिन्दीगद्यानुवाद सहित) | ,, ५.०० |
| १४. | शिवराज्योदयम् प्रथमखण्डः (सारसंक्षेपसहितः) | ,, २०.०० |

व्यवस्थापक
भारती-संस्कृत-मासिक, जयपुरम्


CC-0. Sri Radha Krishna Samsthan, Delhi. Digitized by eGangotri

# जीवनचरित्र-स्तम्भः

## श्रीमद्विहारि-दर्शनम्

[ ले० श्रीजगदीशशर्माणः साहित्याचार्याः, वनस्थलीविद्यापीठम् ]

पूर्वाऽनुवृत्तम् —

परामृश्यैतदीयपरामर्शमभिनन्दन्तः समेल्या-मण्डपाभिधौ ग्रामौ तदानीं मालपुरा-प्रान्ते वर्तमानो राज्ञः सकाशात् प्रत्यग्रहिषत। ग्रामलाभानन्तरमेतेषामनारतं सुखसमृद्धयः समैधिषत। पुरोहितवर्या नैकमात्रं राजनीतिचञ्चवः कुशलाः प्रशासकाः संस्कृताङ्गलया-वनभाषाविद एवापि तु विद्यानुरागिणो विद्वांसश्चाविद्यन्त। एतैः खलु विविधविषयाणां ग्रन्थान् संस्कृतभाषायाश्च नैकविधानि पुस्तकानि सङ्गृह्यैको विशालकायः पुस्तकालयः स्वावास एव स्थापितः। सुहृद्देशीयानामेषां वैदुष्येण कार्यशक्त्या च परितुष्टैस्तैर्महानु-भावैः पुस्तकालयस्य सर्वविधोऽपि भारोऽसयोरारोपित एतेषाम्। सोल्लासमुदूह्य भारमेनं स्वा तेवासिनः श्रीहीरालालशास्त्रिणो मेधाविनः सहयोगेनैष पुस्तकालयस्तथा सम्भालितः प्रचालितश्च यथा खलु साम्प्रतिकपुस्तकालयविज्ञानोपाधिधारिणोऽपि सम्भवतः कर्तुं न्न पारयेयुः।

## आयुर्वेदवैदुष्यम्

इमे पण्डितप्रकाण्डा न केवलं साहित्यवेदान्तज्ञानपरिधिपरिवृताः किन्तु विषयान्त-राक्षुण्णप्रतिभाना अप्यासत। पुरोहितमहाभागानामालये निरन्तरमोषधभस्मादिनिर्माण-कार्यसंलग्ना अवर्तिषतायुर्वेदर्शितविधया। तद्भेषजोपयोगेन च चिकित्सकशरणगतिन्ना-भजत प्रायशः पुरोहितानां परिवारः। पङ्क्तीनामासां लेखकोऽयमपि कदाचन दुःसहसन्ता-पसमुद्विग्नतयाऽऽकुलीकृतगृहस्थगणोऽपरेऽह्नि वनस्पतिपत्राण्याहृतानि पाणितले निधार्य-कतानया दृशाऽऽलोकयितुमादिष्टः पितृचरणैर्नीरोगताभरमेव गमितः। क्रमशः प्रवर्धमा-नोऽयं तत्सखिभावोऽनन्यहृदयास्पदतामसेवत। चतुःसप्तत्यधिकैकोनविंशतिशततमे ( १९-७४ ) विक्रमाब्दे जयपुरजनता महामारीरोगाक्रान्ता प्रतिदिवसं यमलोकातिथिप्रवणाऽ-भवत् महाकालस्येयं नरसंहारलीला प्रत्यालयं व्यापृता। प्रायोऽनेकत्राखिलोऽपि परिवारः सकृदेव प्रलयपयोधौ निमग्नः। दर्श दर्शमेतन्नरसंहारं आवंआवञ्चात्मानं रक्षितुमनसो

CC-0. Sri Radha Krishna Samsthan, Delhi. Digitized by eGangotri

नागरिका इतस्ततः प्रधावमाना ग्रामाननु शरणं ययुः । सम्पदापदोः हर्षविषादयोश्च समानभावा अपि पण्डितमहोदयाः स्वकीयपितृचरणादेशानतिक्रमणीयतया सपरिवारा इतः प्रास्थिषत समेल्याग्राममात्मजन्मभुवम् ।

## तीर्थयात्रा

इमे चतुर्षु धामस्वन्यतमपौरस्त्यधामजन्यफलप्रेप्सया चातुर्यमूलतया च देशाटनस्य तीर्थयात्राविधित्सया सबान्धवाः सपरिग्रहाः प्रस्थितवन्तो ग्रामादमुष्मात् । मध्येमार्गं समागतेषु तीर्थस्थलेषु धर्मशास्त्रनिर्दिष्टं कर्म यथाविधि समाचरन्तो गयातीर्थस्य पथि सम्प्राप्तस्य शास्त्रोक्तरीत्या दुस्त्यजतया गयामधिजग्मुः । शास्त्रनिर्दिष्टं तत्रत्यं श्राद्धादिकं कर्म सश्रद्धं विधीयमानानामन्तरायः कश्चन समापतितः । ततः कारणान्मनस उद्विग्नत्वात् कथङ्कथमपि श्राद्धादिकर्मावसाय्यारब्धं तत एव प्रतिनिवृत्ता गृहानन्यांश्च सहयोगिनो बान्धवान् परावर्तितुमुत्सुकान् सनिर्बन्धमग्रेतनयात्रायै प्रस्थाप्य सपरिग्रहाः ।

## चमत्कृतिचणाख्यातिः

एकस्मिन्नवसरे श्रीमतां राजराजेन्द्राणां महाराजाधिराजानां श्रीमानसिंहनृपतीनां प्रशासनसमयेऽटलोपाह्वश्रीमदमरनाथमहोदयाय वित्तमन्त्रिणे कुपिता जनता सत्याग्रहस्याह्वानं कृतवती तत्कार्यविरोधप्रदर्शनाय । नासीदयं जयपुरनरेशः श्रीमानसिंहस्तस्मिन्काले वयस्कतामापन्नः—इति पुरोहितवर्याः श्रीगोपीनाथमहाभागा एव सर्ववरिष्ठतयाऽमात्यकार्यधुरामवक्षत ।

सत्याग्रह ( हड़ताल ) विफलयितुं विधीयमाना अटलमहोदयानां सर्वेऽप्युपाया निष्फलाः सारशून्याश्चासन् । यथा यथा चामी महाभागाः प्रयासमकुर्वत तथा तथा सत्याग्रहकार्यं दीर्घभावमभजत् । दिनत्रये व्यतीतेऽपि न तत्र किमपि शैथिल्यमभवत्, तत्कार्यं तथैव प्राचलत् । सर्वत्राङ्ग्लानां शासनसत्त्वात् सप्ताहं प्रचलिते सत्याग्रहे शासनसूत्रस्यायोग्यतावशाद्राज्यशासनमाङ्ग्लशासकप्रतिनिधिहस्तगतं स्यादिति नियमोत्थचिन्तयाऽऽकुलीकृताः पुरोहितमहाभागाः किङ्कर्तव्यविमूढधियोऽनन्यशरणं सुहृच्छरणं समाश्रित्याखिलोदन्तजातमुदीरयामासू रहसि । सम्पूर्णं वृत्त समाकर्ण्यावहितेन मनसाऽपदुप्रस्तान् व्यथितहृदयानिमानवगत्य स्वेष्टबलेन विज्ञाय सर्वं सविश्वासं दृढतया निगदितवन्तो मा भैषीः सर्वं समीहितं सेत्स्यति तेऽनुकूलम्, शीघ्रमेव च सत्याग्रहो भङ्गं गमिष्यति । जनतामध्यगतेषु भवत्सु सातिशयं श्रद्दधाना जनताऽवश्यमेव भवदुदीरितवचोविश्वासमवाप्य सत्याग्रहं भङ्-

CC-0. Sri Radha Krishna Samsthan, Delhi. Digitized by eGangotri

क्ष्यतीति तद्वचनानुसरणेऽनुष्ठिते सर्वं तथैव सुसम्पन्नम् । महाराजमानसिंहेन भूरि विकत्थिताः पुरोहितवर्याः सर्वसामन्तसमक्षं सत्याग्रहभङ्गवृत्तं निशम्य प्रफुल्लचेतसा राजसंसदि । साध्यासादितसाफल्याह्लादितान्तःकरणाः श्रीगोपीनाथमहोदयाः सद्म समेत्य सायं सुमनसां कृतज्ञतां प्रकाश्य गृहानगमन् ।

कदाचनैतेषां पुरोहितमहाभागानां पौत्रवध्वामन्तर्वत्न्यां जातायामेतस्याः किं भविष्यति पुत्रः पुत्री वा कदा चेति जिज्ञासायां स्वकीयज्योतिःशास्त्रज्ञानबलेन द्वित्राहानन्तरं लग्नकुण्डलीं निर्माय मासदिनसमयादिकञ्चोल्लिख्य तत्र भाविनो बालकस्य ग्रहस्थित्याऽस्मिञ्छास्त्रेऽपि स्वीयापूर्वप्रावीण्यं प्रादर्शि पण्डिततल्लजैः । जन्माक्षरलेखानुसारमेव शिशुना जनुरात्तमित्यालोच्य सातिशयमेते पुरोहिता मुग्धा बवृतिरेऽत्र ।

एवंविधविद्वत्ताहेतोरमीषामियती घनिष्ठता जाता यदनागतेषु विद्वन्महाभागेषु कस्मिंश्चिद् दिने सेवकं सम्प्रेष्य विह्वलीभूतास्तानाजुहवुः । यत्र कुत्रापि चापूर्वस्थानान्यालोकयितुमन्तरेणैतान्न गन्तुमुत्सहन्तेस्म, समाहूय सह नीत्वैवागच्छन् चमत्कृतिनिर्भरां ख्यातिमिमां प्रसृमरां कर्णगोचरीकृत्यानेके सामन्ताः स्वीयविविधकार्यसिद्धयेऽनुदिनं सेवितुमारभन्तैतान् ।

श्रुतानेकानुष्ठानसिद्धिचमत्कारः शेखावाटीप्रान्तान्तर्गत-महणसराभिध-संवसथ–सामन्तो बाघसिंहमहोदयः स्वकीयकार्यसिद्धिमसाध्यां मन्वानश्चिन्तासन्तानैकस्वान्तः समागत्य कदाचिदवसरे समग्रमपि वृत्तान्तजातं न्यवेदयन्नित्थङ्कारमेतेभ्यः—महात्मन् ! शेखावाटीमण्डलान्तर्गत-नवलदुर्ग ( गढ़ ) ग्रामस्य पञ्च सामन्तास्तदुपभोगभागिनः स्वामिनः । तेष्वन्यतमस्मिन् सामन्ते निरपत्यतया त्रिदिवमुपगते तदुत्तराधिकारितायामधिकारो मामकीनः परमितरैश्चतुर्भिः सामन्तैः सम्भूय मद्विरुद्धं मिथ्याभियोगः प्रवर्तितो न्यायालये स्वाधिकारित्वसिद्धये । एतदावेदितवृत्तान्तं श्रवणपुटाभ्यां निपीय दिवसत्रितयानन्तरमागन्तुमादिशन् पितृचरणाः । ततो निर्दिष्टदिष्टानुसारं समुपस्थितमेनं कस्यचनानुष्ठानविधेर्विधानमब्रुवन् कारयितुं यावत्कार्यसाफल्यम् । निर्दिष्टविधिना केनाप्यनुष्ठात्राऽनुष्ठापितमनुष्ठानम् । अनुष्ठानपूर्ते प्रागेवाभियोगनिर्णयस्यात्मानुकूलतामभिलक्ष्य श्रीबाघसिंहोऽतीव विसिष्मये । अनुष्ठानप्रभावेण दुराशामाशापरिणतामात्मनोऽवगत्य न्यायोचितमन्यसामन्तसमानाधिकारं सम्मानञ्चाधिगम्यासामोदीत् । अभवच्चासावेषामाजन्मादेशपालनपरायणोऽन्तेवासीव ।

CC-0. Sri Radha Krishna Samsthan, Delhi. Digitized by eGangotri

## अप्रत्याशितं निःस्पृहत्वम्

इदमीयचमत्कारचकितैः पञ्चभिरपि सामन्तैरेकीभूय प्रार्थिताः सुमनसो यच्छ्रीमन्तो नवलदुर्गस्थितविशालतमस्य सुरम्यशिल्पकलाभिः समागतभक्तजनान्तःकरणहारिणः स्वामित्वमङ्गीकृत्यास्माननुगृह्णन्तु । अद्यप्रभृति विशालतमं भगवन्मन्दिरमिदं भूभागञ्चैतदीयसर्वविधव्ययसाधनं श्रीचरणयोः समर्पयामः । श्रद्धासम्पत्त्या साग्रहं समर्पितमेतत्स्वीकृत्य महाभागैरमीभिः कश्चन स्वीयो बान्धवः श्रीवृन्दावननामधेयस्तत्र तद्व्यवस्थामाधातुं नियोजितः । श्रीवृन्दावनेन च तत्र भगवतोऽर्चनादिव्यवस्था सभक्त्यनुरागं प्राणहितेन चेतसा सम्यक् सम्पादिता ।

व्यतीतेषु कतिपयमासेषु लक्ष्मीमदोन्मत्तः स्वामिताऽहङ्कारान्धीभूतः सामन्तगणो निवेदयामासैभ्यो यदत्र समुपेत्यामुष्मिन् मन्दिरेऽत्रत्यजनताचारादिधार्मिकोपदेशलाभाय निवासो विधेयः श्रीमद्भिरन्यथा किम्प्रयोजनमेतदर्पणेनेति ? दुराग्रहपूर्णं तदीयं साभिमानमेतद्वचोऽवहेल्य तत्कालमेव श्रीवृन्दावनो बान्धवः समाहूतः समग्रमपि च तद्वैभवं तृणमिव क्षणेनैव सर्वथा परित्यक्तम् । अदसीयाऽऽयोपयोगः श्रीमद्भिः स्वपरिवारस्यात्मनो वा कृतेऽधमत्वापत्तिमालोचयद्भिर्जातु न लेशतोऽपि विहितः । सामन्तानामीदृशी कल्पना स्वप्नेऽपि नासीद् यदेतादृशं हस्तगतं वैभवं सहस्रशो रूप्यकाणां वार्षिकायप्रदातृभूभागञ्च कश्चन क्षणमात्रेणैव परिहातुं किं पारयेत् ? एवंविधत्यागप्रभाविता अनुष्ठानादिप्रयोगभीताश्च ते मुहुर्मुहुः क्षमा याचित्वा पुनर्मन्दिरादिग्रहणार्थं प्रार्थयामासुः । "निःस्पृहस्य तृणं जगत्" इत्युक्तेरुदाहरणतयादर्शभूताः कथङ्कारमपि न निर्बन्धमङ्गीकर्तुं प्राभवन् । गुणगणैराकृष्टहृदयाः सामन्ता भूयोऽपि स्वकीयामतुलां श्रद्धामसाधारणां भक्तिञ्चाणुमात्रमपि नाल्पाङ्कर्तुमीशाः ।

## आर्त्तत्राण-परायणता

कुलपरम्परयैव श्रीमतामालयः परमाद्भुता खनिर्ज्ञानमणीनाम् । एतैश्चाकरोद्भवमणिभिरिव शाणोल्लेखैः संस्कारैः प्राक्तनैर्ज्योतिषशास्त्रेऽसाधारणा दीप्तिरासादिता । ज्योतिषशास्त्रस्कन्धान्यतमस्कन्धवर्तमानामभिज्ञतां श्रावं श्रावमिभ्या व्यापारिणः सामन्ता अधिकारिणश्चानवरतमात्मभविष्यजिज्ञासया गृहानापेतुः । नक्तन्दिवं विविदिषूणां सम्बाधो नितरां प्रावर्तत । कश्चन वस्तूनां क्रयविक्रयार्थं महर्घता-समर्घता-ज्ञानपिपासामुदञ्चयितुमपरश्चाङ्कविषयिणीं जिज्ञासामपाकर्तुमन्यश्च दारिद्र्यापायोपायविविदिषया

( क्रमशः )

CC-0. Sri Radha Krishna Samsthan, Delhi. Digitized by eGangotri

# विवेकानन्दचरितम्

श्रीविश्वनाथ केशव छत्रे शास्त्री कल्याण (ठाणें)

पूर्वाऽनुवृत्तम्—

कथमपि निजकार्यं सोऽनुतिष्ठन् दिवा च
निशमपि गमयन् हा ! दुःसहोन्निद्रतायाम् ।
सुरसरित उपेतस्तीरमुच्चैः स रौति
त्वरय वद कदा नु प्राप्स्यसि त्वं नरेंद्र ! ।।२६।।

प्रतीक्षितं प्रियं वत्सं मासानंतरमागतम् ।
दृष्ट्वा तत्स्वागतं हर्षाद् व्याजहार यतीश्वर ।।२७।।

एकाकी मंच ग्रासीनः कोष्ठे स्वांतिकमाह्वयत् ।
वत्सं, स तु मनाग् दूरं भीत ईषदुपाविशत् ।।२८।।

तं दृष्ट्वा सहसा साधुः प्रेमोत्पूरितमानसः ।
उपगच्छन् शनैः पादं तदंगे सहसा न्यधात् ।।२६।।

तत्पदस्पर्शमात्रेण स्थित्यंतरमगाद्युवा ।
ग्रद्भुतं च जगत् सर्वं तस्य प्रोत्सतदाबभौ ।।३०।।

स्तंभश्च भित्तयः सर्वा भ्रमंत्य परितः स्थिताः ।
क्वापि वेगेन धावंति, लयं शून्यं प्रयांति च ।।३१।।

भ्रमद् जगदशेषं च जवेनांतर्दधाति च ।
शून्ये स्वस्याप्यहंकारो बहिर्निर्यन्निवाबभौ ।।३२।।

ग्रवस्थां मरणप्रायां नरेंद्रोऽनुभवंस्तदा ।
भीत्याक्रोशत् 'किमेवं भो ! जीवनं मे विनाश्यते ? ।।३३।।

'पितरौ सदने मे स्तो मुच्यतां, मुच्यतामहम्'
इत्याकर्ण्यार्थनामार्तां, रामकृष्णोऽवदत् स्मयन् ।।३४।।

'ग्रयं तावदपक्वोऽस्ति ब्रह्मनिष्ठपदं च सः ।
विलंबेनाप्स्यतीदानीं त्वरा नैवोचिता मम' ।।३५।।

CC-0. Sri Radha Krishna Samsthan, Delhi. Digitized by eGangotri

पदं संहृत्य तद्देहात्, स्वास्थ्यं तं प्रापितं पुनः ।
मोदकान् खादयित्वैव रामकृष्णो व्यमोचयत् ।।३६।।

द्वितीये दर्शने साधो नरेंद्रः संभ्रमेऽधिके ।
प्रपतन् मोहिनीमंत्र-प्रयोगं तमशंकत ।।३७।।

'तद्वशेऽहं कथं यातो मौढ्यात् अपि विचारवान् ।
किमदंभोऽस्त्ययं साधुर्' इति चिंतापरोऽचलत् ।।३८।।

'मया साक्षात् कृतोऽस्तीश' इति निश्चयपूर्वकम्
उत्तरं प्रददत् साधुरसामान्यो न संशयः ।।३९।।

इत्यशेषाद्भुता नव्या घटनाः संस्मरन् मुहुः ।
विमृश्य निर्णयं प्राप्तो नरेंद्रः स्वगृहं गतः ।।४०।।

दक्षिणेशं पुनर्यातः सोऽष्टाभिर्दिवसैःपरम् ।
कृतनिश्चयो न यातुं तत्-साधोःसंमोहिनीवशम् ।।४१।।

रामकृष्णोऽनयद्वत्सं मल्लीकोपवनं प्रति ।
भ्रमित्वा तौ ससंलापं दर्शन[1]स्थानमीयतुः ।।४२।।

गतो भावसमाधिं च सहसा स यतीश्वरः ।
स्पृष्टस्तेन नरेंद्रश्च पतितो भुव्यचेतनः ।।४३।।

प्राप्तः स जागरं यावत् तावत् साधुं स ऐक्षत ।
स्ववक्षसि निपीडं तं मृदुस्निग्धेन पाणिना ।।४४।।

अस्यां स्थित्यां नरेन्द्रस्य विधायांतर्मुखं मनः ।
सोऽपृच्छत् 'कोऽसि ? किं हेतुर्जन्मनस्तेऽवनौ' इति ।।४५।।

वसतिः कियती चेति लब्धवेष्टान्युत्तराणि च ।
न्यस्तुं ज्ञाननिधिं सोऽर्हत् इति योगी समादधे ।।४६।।

नरेंद्रासक्तचित्तोऽसौ तं चिरं न समागतम् ।
दर्शनोत्कः स्वयं यातः सुहृद्भिः सह संस्थितम् ।।४७।।

1. Meeting hall in the garden building

CC-0. Sri Radha Krishna Sansthan, Delhi. Digitized by eGangotri

उपरिष्ठितभूकोष्ठे 'नरेन् ! वत्स ! नरेन्' इति ।
शब्दापयन् नरेंद्रस्तत् शब्दं श्रुत्वा द्रुतं गतः ॥४८॥

धावन्नधस् तमालोक्य बाष्पपूर्णाकुलेक्षणः ।
साधुराह 'किमर्थं नो चिरात् त्वं मां समागतः' ॥४९॥

आनीतान् मोदकान् तं च खादयित्वादिदेशः ।
गातुं भक्तिपरं गीतं, नरेंद्रेण तथा कृते ॥५०॥

अभूद् भावसमाधौ द्राग्लीनः साधुवरश्च तम् ।
नरेंद्रः प्रकृतिं प्राप्तं प्रापयद् दक्षिणेश्वरम् ॥५१॥

गतो ब्राह्मसमाजस्य प्रार्थनालयमेकदा ।
नरेंद्रदर्शनार्तोऽसौ साधुः कृच्छ्रं समावहत् ॥५२॥

प्रार्थनैकाग्रताभंगो भक्तानां हि ततोऽभवत् ।
ततो नीत्वा बहिः शिष्यस्तमाह विनयान्वितः ॥५३॥

परमीषत् सकोपं 'भोः ! किं भवान् नावगच्छति ।
मृगार्भासक्तचित्तस्य भरताख्यमुनेः कथाम् ? ॥५४॥

नरेन् ! नरेन् ! इति ध्यायन् दिवानक्तं, तथा भवान् ।
मूढवत् स्वपतः कुर्याद् वृथेत्यस्ति भयद् भयम्' ॥५५॥

ततो विवेकमाश्रित्य हठाद् रुंधन् स्वभावना:
क्षयन् स्वांतस्तु नामापि नरेंद्रस्य जहौ जने ॥५६॥

आयातमपि नापश्यत् परिवर्त्य दृशं द्रुतम् ।
अभ्यागतात् पुरस्तस्माद् भाषणं दूर एव तत् ॥५७॥

एवं तस्य गता अनेकदिवसा मौनव्रतं बिभ्रतः ।
बाह्ये, पालयतस्तु तत्प्रतिफलं शिष्यात् प्रियाद् उत्कटम् ॥
'प्राप्तोऽस्यत्र किमर्थमित्यतिचिराद् दृष्ट्वाऽनुयुंक्ते मुनिः ।
शिष्यं, 'प्रेक्षणभाषणादिविमुखं मां रे वृथा यासि किम् ? ॥५८॥

CC-0. Sri Radha Krishna Samsthan, Delhi. Digitized by eGangotri

'सत्यं भवान् आहु न भाषते भोः ! सार्धं मया प्रत्यवदद् नरेंद्रः ।
भवत्कृते निर्मलभक्तिभावो मां प्रेरयत्यागमनाय नूनम् ।।५९।।

लभे भवत्पावनदर्शनेन यद्यत् समीहे भगवद् दिदृक्षुः' ।
एतेन शिष्यस्य सुभाषणेन प्रीतो गुरुः प्रेम दधत् प्रगाढम् ।।६०।।

स सद्गुरुं यात्यनिशं ततश्च सत्संगहेतोर्महतादरेण ।
बीए० परीक्षोत्तरमेष वासं करोति तत्र त्रिचतुर्दिनानि ।।६१।।

पानाशने साधुरसौ न्यगृह्णात् तीक्ष्णं स्वशिष्यांश्च तथा दिदेश ।
तद्दातृभावाः प्रभवंत्यवश्यं शुभाशुभा भोक्तृजनेषु यस्मात् ।।६२।।

जपध्यानज्ञानार्जनवितरणे तीक्ष्णनियमान्
मुनिर्निद्रायां च प्रथममनुपाल्य स्वयमसौ ।
तथा स्थातुं यत्नैरुपदिशाति शिष्यानविरतं
यशो न ह्याचारो नियमरहितो जातु तनुते ।।६३।।

इति सद्गुरुतः उद्बोधनम् नाम

षष्ठः सर्गः

## विवेकानंदचरितम् सर्गः–७

## अद्वैतानुभूतिः

व्यक्तित्वनिर्मितेः कार्यं महापुरुषजीवने ।
द्रष्टुमुन्नतिकामानां मोददं मार्गदर्शकम् ।। १ ।।

चरित्रस्य पटं तस्य कालो वयति तंतुभिः ।
लंबरूपैः समैर्नेकैः क्रमेण च सकौशलम् ।। २ ।।

विविधानुभवा आद्या लभ्यमाना अनुक्षणम् ।
तं ततो, जन्मलब्धाश्रीः प्रेरणान्तश्च तेऽपरः ।। ३ ।।

नरेंद्रोऽधीत्यपाश्चात्यतत्त्वज्ञानमन्यत ।
निश्चितं भासमानं तत् सत्यरूपं न चान्यथा ।। ४ ।।

( क्रमशः )

CC-0. Sri Radha Krishna Samsthan, Delhi. Digitized by eGangotri

# आयुर्वेद-स्तम्भः—

## आयुर्वेदीयं आत्मस्वरूपम्

श्री वा० बा० नटराज शास्त्री

पूर्वाऽनुवृत्तम्—

सप्तधातुकत्वम्—कण्ठादिस्थानाभिव्यक्तसप्तस्वरशोभितं भवति। किञ्च, रसादिशुक्रान्तसप्तधातुमच्च।

गर्भस्य अष्टमे मासे प्राप्ते तद्गर्भावच्छिन्नस्य जीवस्य अतीतार्थवेदनसामर्थ्यमाह श्रुतिः—

"पञ्चात्मकसमर्थः पञ्चात्मकतेजसा इद्धरसश्च सम्यग्ज्ञानात् ध्यानात् अक्षरमोङ्कारं चिन्तयति। तदेकाक्षरं ज्ञात्वा अष्टौ प्रकृतयः षोडशविकाराःशरीरे।"

भाष्यसंङ्ग्रहः—पञ्चात्मकसमर्थः—प्राणादिपञ्चवृत्यात्मकप्राणेन स्वोपाधिभूतेन मिलित्वा गर्भगतजीवः अतीतार्थवेदने समर्थो भवति। तथा पञ्चात्मकप्राण तेजसा इद्धः, वृद्धि गतो रसः, सारो यस्य सोऽयं, च शब्दात् क्रियाशक्तिः, प्राणारूढो जीवशक्तिः, ईश्वरभावापत्त्या इच्छाशक्तिरपि पिण्डपाती न स्यादिति द्योत्यते। एवंभूतः स हि अजड क्रियाज्ञानेच्छाशक्तिमानिव सम्यज्ज्ञानात् ध्यानाच्च कालत्रयेऽपि न क्षरतीत्यक्षरं ओङ्कारं

**रोज़गार का अवसर**

मैट्रिक तथा अधिक पढ़े-लिखे स्त्री तथा पुरुषों को भारत के सभी प्रान्तों में से ट्रेनिंग तथा तदुपरान्त सेल्ज आफीसर-कम-टैक्नीशियन के पद पर उनके अपने ही शहर, कस्बे अथवा गांव में 800 रु० मासिक एमालुमेन्टस तथा अतिरिक्त कमीशन के आधार पर नियुक्ति के लिये आवश्यकता है। टेक्नीशियन के तौर पर आमदनी तथा कमीशन मिला कर कुल आय 1500 रु० मासिक से अधिक। पूर्ण विवरण प्रास्पैक्टस तथा आवेदन फार्म के लिये मनी आर्डर द्वारा शीघ्र 7 रु० भेजें।

**चिकागो इन्स्टीच्यूट आफ टेक्नालोजी**

16/126, गीता कालोनी, दिल्ली–110031। को भेजें।

CC-0. Sri Radha Krishna Samsthan, Delhi. Digitized by eGangotri

आत्मानं अयमहमस्मीति चिन्तयति। एवं तदेतदेकाक्षरं आत्मतया ज्ञात्वा, स्वातिरिक्ततया याः प्रकृताः अष्टौ प्रकृतयः भूतपञ्चकमनोबुद्धयहंकाराख्याः, प्रश्नोपनिषत्पठिताः प्राणादिषोडशकला एव विकाराः। गर्भशरीरं जीवः पश्यति एवम्।

नवमे मासि पूर्वजातिस्मरणं—तस्यैव देहिनोऽथ नवमे मासि देहः सर्वलक्षणसम्पूर्णो भवति। पूर्वजातिं स्मरति। कृताकृतं कर्म विभाति। शुभाशुभं कर्म विन्दति। वस्तुतः शरीरासङ्गतोऽपि शरीरावच्छिन्नो जीवः।

जीवस्य प्राक्तनकर्मवेदनपूर्वक परिदेवनम्—

"नाना योनिसहस्राणि दृष्ट्वा चैव ततो मया।
आहारा विविधा भुक्ताः पीताश्च विविधाः स्तनाः॥
जातस्यैव मृतस्यैव जन्म चैव पुनः पुनः।
अहो दुःखोदधौ मग्नो न पश्यामि प्रतिक्रियाम्॥

आसिन्धुः सिन्धुपर्यन्ता-यस्य भारतभूमिका।
पुण्यभूः, पितृभूश्चैव-स वै हिन्दुरिति स्मृतः॥
—वीर सावरकर

सिन्धु महानद से लेकर सागर पर्यन्त इस भारत की भूमि को जो व्यक्ति अपनी पुण्यभूमि और पितृभूमि स्वीकार करता है, वही "हिन्दू" है।

"पर उपदेश कुशल बहुतेरे,
जे आचरहिं ते नर न घनेरे" —गोस्वामी तुलसीदासजी

वह मुसाफिर क्या जिसे कुछ शूल ही पथ से थका दें?
हौसला वह क्या जिसे कुछ मुश्किलें पीछे हटा दें? —अज्ञात

**पंजाबी चन्दू हलवाई करांचीवाला**

कार्यालयः—१८५, बालकेश्वर रोड, तीनबत्ती, बम्बई—४००००६

स्थापना—१८९६  शाखायें :—  तारका पता।—'चन्दूमेवा'

(१) जवेरी बाजार (२) ग्रान्टरोड (३) कोलावा (४) दादरा (५) वरली नका (६) सायन सर्कल (७) ठाकुरद्वार (८) सूर्योदयस्टोर्स, चर्चगेट (९) घाटकोपर (पश्चिम) (१०) लिंकिंग रोड, (११) रेलवे स्टेशन के सामने, सांताक्रुज (पश्चिम)

कारखाना :—चन्दू भवन, ग्रान्टरोड, बम्बई-४०००७

CC-0. Sri Radha Krishna Samsthan, Delhi. Digitized by eGangotri

यदि योन्याः प्रमुञ्चामि साङ्ख्यं योगं समाश्रये ।
अशुभक्षयकर्त्तारं फलमुक्तिप्रदायिनम् ।।
यदि योन्याः प्रमुञ्चामि तं प्रपद्ये भगवन्तं नारायणं देवम् ।
अशुभ–क्षयकर्त्तारं फलमुक्तिप्रदायिनम् ।।
यन्मया परिजनस्यार्थे कृतं कर्म शुभाशुभम् ।
एकाकी तेन दह्यामि गतास्ते फलभागिनः ।।"

अर्थः स्पष्टः । अन्त्यश्लोकस्य भाष्यम्—'दारपुत्रादिपरिजनपोषणहेतोः यावत् शुभाशुभं कर्म नित्यकर्मवत् मया कृतं तत् फलं अनेककल्पकालं स्वर्गनरकादि भुक्तं ततोऽधिकतरं कष्टं कुम्भीपाकोपमे गर्भनरके अहं एकाकी शोचामि । यन्मया पालिताः दारपुत्रादयस्ते यथागतं स्वां स्वां गतिं अवष्टभ्य गतास्ते केवलफलभागिनः, नहि मत्कृत-दुष्कृतभोक्तारो भवन्ति ।


# अरुण उद्योग

माइन ओनर्स, रेजिंग कोन्ट्रेक्टर्स ट्रांसपोर्ट्स
बैंकर्स एण्ड कमीशन एजेन्ट्स

दूरभाष : ७३६२६
ग्राम अरुण उद्योग

हैड आफिस :
श्री राम भवन
किशनपोल बाजार, जयपुर–१

ब्रांच आफिस :
गांधी मार्ग, भद्रक (उडीसा)
स्टेशन मार्ग के सामने, जे० के० रोड़
( उडीसा )



वकिंग एट :
बाउला क्रोमाइट माइन्स एट : धानपुर जैपुर, जिला के उनझर (उडीसा)
केथपाल क्रोमाइट लाइन्स एट: बिरसल जिला धेनकानाल (उडीसा)


CC-0. Sri Radha Krishna Samsthan, Delhi. Digitized by eGangotri

गर्भात् भूमिपतनकालपर्यन्तं संसारदुःखं इतः परं अशुभकर्माणि नारप्स्ये इति कतिपयमुहूर्त्तकालं मुमुक्षुरिव तपति जीवः। अथ भूपतनावसरे प्राप्ते, नरकात् पतन्निव—अवाक्छिरा ऊर्ध्वपदो भूत्वा योनिद्वारि संप्राप्तः सन् योनियन्त्रेण परिपीड्यमानो महता दुःखेन जायते। भूपतनादर्वाक् शीर्षोदयवेलायां दुरत्ययया वैष्णव्या मायया संस्पृश्यतेऽयं जन्तुः। तत् क्षणात् पूर्वजन्मवृत्तं—योन्याः विमुक्तः अशुभक्षयकर्त्तारं महेश्वरं प्रपद्ये—इति संकल्पितादिकं सर्वं विस्मरति।

जीवात्मनः पुनर्भवनिवृत्तये वैराग्यं अत्यन्तमावश्यकम्। गर्भवासे सम्भवत्कष्टानां उपदेशात् बैराग्यं सञ्जनयितुं प्रवृत्तायाः गर्भोपनिषदः आयुर्वेदे स्पष्टं अनुक्ताः गर्भस्यस्थ जीवस्य मनोभावाः संकलिताः। अथ आयुर्वेदोपदिष्टान् गर्भावक्रान्तिप्रक्रियाविशेषान् अनुसंकलयामः।

मातृ-पितृ-जीवात्म-सात्म्य-रस-सत्वेति षड्भावेभ्यः समुदितेभ्यः गर्भः सम्भवतीत्युक्तमग्रे। शुक्रशोणितजीवसंयोगे गर्भाशयगते गर्भसंज्ञा भवतीति च। तत्र आत्मवर्जं अन्येषां पञ्चभावानां पाञ्चभौतिकत्वात् पञ्च महाभूतविकारसमुदायात्मको गर्भः चेतनाधिष्ठानभूतः; सह्यस्य षष्ठो धातुरुक्तः, षड् धातुकः पुरुषः इति।

तैत्तिरीयोपनिषदि प्रपञ्चसृष्टिक्रमः "आत्मन आकाशः, आकाशाद् वायुः—"इति यथा प्रोक्तः, तथैव जीवात्मनः प्रतिगर्भसृष्टिः सम्भवति। परमार्थतः परमात्मजीवात्मनोरभेदात् इति आयुर्वेदवेदान्तदर्शनयोर्मतभेदञ्च अर्थतः संगृह्य प्रतिपादयति-आयुर्वेदः—"तत्र पूर्वं चेतनाधातुः सत्वकरणः गुणग्रहणाय प्रवर्त्तते। इह गुणशब्दः भूत-


## रोजगार का सुनहरा अवसर

ब्रांच मैनेजरज, डिप्टी ब्रांच मैनेजरज तथा मैट्रिक और अधिक शिक्षा प्राप्त स्त्री तथा पुरुष फील्ड अफसरों को भारत के सभी नगरों तथा शहरों में से 2.000/–, 1000/-, 800/- तथा 600/- रु० मासिक तथा अतिरिक्त कमीशन पर आवश्यकता है। अवकाश प्राप्त व्यक्ति भी आवेदन करें। पूर्ण विवरण प्रास्पैक्ट्स तथा आवेदन फार्म के लिये 7 रु० मनिआर्डर द्वारा जनरल मैनेजर—

यूनीवर्सल ट्रेडिंग कारपोरेशन,
16/126, गीता कालोनी, दिल्ली-110031 को भेजें।


CC-0. Sri Radha Krishna Samsthan, Delhi. Digitized by eGangotri

वाचकः गुणगुणिनोरभेदोपचारात् ) स हि हेतुः कारणं निमित्तम्। अक्षरं कर्त्ता मन्ता वेदिता बोद्धा द्रष्टा धाता ब्रह्म विश्वकर्मा विश्वरूपः पुरुषः प्रभवः अव्ययः पुद्गलः ( परमाणुः ) चेतनावान् विभुः प्रभुः भूतात्मा च इन्द्रियात्मा च अन्तरात्मा चेति।"

अत्र ज्ञातव्यम्—स हि हेतुः कारणं निमित्तं इति पर्यायैः आत्मैव प्रपञ्चसृष्टेः समसृष्टेः समवायि असमवायि निमित्ताख्यकारणत्रयं च भवति इति, तथा हेतुरादि-अन्तरात्मान्तै त्रिंशद्विशेषणैः जीवब्रह्मणोरैक्यं च प्रबोधयति आचार्यः इति।

यथा प्रलयात्यये सिसृक्षुर्भूतानि अक्षरभूत आत्मासत्वोपादानः पूर्वतरं आकाशं सृजति, ततः क्रमेण व्यक्ततरगुणान् धातून् वाय्वादिकांश्चतुरः, तथा देहग्रहणेऽपि जीवात्मा पूर्वतरमाकाशमेव उपादत्ते; ततः क्रमेण व्यक्ततरगुणान् धातून् वाय्वादिकांश्चतुरः। सर्वमपितु एतत् गुणोपादानं अणुना कालेन भवति। जीवात्मनः गर्भाशये शोणितशुक्रसङ्घात ग्रहणे कतमं भूतं प्रथमं गृह्णातीति विवृतिः गर्भोपनिषदि नान्यास्वपि एवं स्पष्टतया उपलभ्यते इति स्मर्त्तव्यम्।

लोके मनुष्याणां मानसिकाः स्वभावाः अपरिसङ्ख्येयप्रकारा दृश्यन्ते। तथा वैचित्र्यस्य हेतुमाह आचार्यः—यथा वातपित्तश्लेष्मणां शरीरधातूनां मिथः संयोगविशेषैः शरीरप्रकृतयः बहुधा भवन्ति, एवं मनसो गुणास्त्रयः सन्ति सत्वं रजस्तमः इति। ते भिन्नस्व भावाः। तत्र सत्वं शुद्धं-अदोषमाख्यातं कल्याणांशत्वात्, राजसं सदोषमाख्यातं शेषांशत्वात्, तामसमपि सदोषमाख्यातं मोहांशत्वात्॥

एतेषां तु त्रयाणामपि मनोगुणानां एकैकस्य भेदाः अपरिसङ्ख्येया भवन्ति, शरीरयोनिविशेषेभ्यश्च, अन्योन्यानुविधानाच्च। शरीरं ह्यपि मनः अनुविधीयते मनश्च शरीरम्। तस्मात् शरीरमनः प्रकृतयः अपरिसङ्ख्येयाः सम्भवन्ति।

अत्र शारीराः वातपित्तश्लेष्मप्रकृतयः गर्भाधानकाले शुक्रशोणितगतदोषनिबन्धनाः ऐहिकजन्मावसायिनश्च। मनोगुणाः सत्त्वरजस्तमांसि तावत् पूर्वजन्मकृतशुभाशुभकर्मानुविधायिनः उत्तरजनिव्यापकाश्च भवन्ति। सत्त्वरजस्तमसो लक्षणानि आयुर्वेद-सांख्य-योग-वेदान्तदर्शनेषु सर्वथा अभिन्नानि इति च बोद्धव्यम्। मानवानां स्वभाव वैचित्र्यस्य मनोगुणाः सत्त्वरजस्तमांसि हेतव इति ते, अतीतानागतबहुजन्मानुस्यूतिवन्त इति च नव्याः मनोवैज्ञानिकाः नाद्यापि विन्दन्ति। ( क्रमशः )

CC-0. Sri Radha Krishna Samsthan, Delhi. Digitized by eGangotri

# विश्व-वार्ताः—

## विदेशे "भगवतो" भक्तानां समारोहः

ले० श्रीविश्वदर्शी

जानन्ति 'भारती' पाठका यत् कलियुगे धर्मचक्रप्रवर्तनस्य घोषणां कृत्वा भारतस्य पुणेनगरात् पलायितवतो " भगवतो " रजनीशस्य तथाकथितः आश्रमः संप्रति अमरीका-देशे 'ओरेगान'—राज्ये सुरम्ये पर्वतीयस्थले पुनः कार्यं प्रारभते । कोटिशो विदेशीयः मुद्रा व्ययीकृत्य तत्र क्रीते भूखण्डे तथाकथितेनानेन भगवता एकस्य सहकारिनगरस्य स्थापना कृता यत्रागामिनि नवम्बरमासे नगरपालकानां निर्वाचनमपि भविष्यति । आषाढपूर्णिमायां गुरुपूर्णिमामहोत्सवोपलक्ष्ये तत्र सप्तसहस्र-भक्तानेकीकृत्य सप्ताहव्यापी समारोहोऽस्मिन् वर्षे समायोजितः । प्रत्येकं भक्तेन 350 डालरमितो राशिः समारोहस्य प्रवेशशुल्करूपेण (प्रायः सपादत्रिसहस्ररूप्यकात्मको राशिः प्रतिभक्तम्) गुरुदक्षिणाविधया समर्पितः ।

काषायवस्त्रधरा आङ्गलभक्ताः अश्रुपूरितनयनैर्भक्तिभावेन कलियुगीयभगवतो दर्श-नायैकत्र समभूवन् । विशाले मंडपे "बुद्धं ( रजनीशं ) शरणं गच्छामि, बुद्धस्य आश्रमं शरणं गच्छामि', बुद्धस्य परमं सत्यं शरणं गच्छामि' इत्यादि सूचना प्रदानि वाक्यानि समु-ल्लिखितान्यभूवन् । प्रातर्ध्यानकेन्द्रस्य प्रार्थना गीयते याद्ध "सत्संग" इत्याख्यायते । रज-नीशव्याख्यानानां ध्वनियंत्रैः प्रसारणम्, गानम्, इत्यादयः कार्यक्रमा अत्र भवन्ति, भगवान् न भाषते । स 'तु श्वेतकंचुकधरः, सशस्त्रैर्गणवेषधारिभिरङ्गरक्षकैः रक्षितो मंचोपरि स्थितः केवलं दर्शनं ददाति । दर्शनानन्तरं बहुमूल्ये रोल्स रायस' इत्याख्ये मोटरयाने स स्वकीयं हर्म्यं प्रतिष्ठते । मोटरयानं विशाले आश्रमप्राङ्गणे परितो भ्राम्यति, भगवन्त-मारूढं कृत्वा, येनाश्रुपूरितैर्भक्तिभृतैर्नेत्रैर्भक्तास्तस्य दर्शनेन पुण्यलाभं कुर्युः ।



CC-0. Sri Radha Krishna Samsthan, Delhi. Digitized by eGangotri

# संस्कृतव्याकरणप्रवेशिका

## अव्यय ( अविकारीशब्द )

लेखकः श्रीविश्वनाथमिश्रः, बीकानेरः

पूर्वाऽनुवृत्तम्—

## कृदन्तमूलक अव्यय

कृत् प्रत्यय जो धातु से विहित होते हैं उनके मिलने से बने हुए शब्द भी अव्यय कहे जाते है इनकी अव्यय संज्ञा "कृन्मेजन्त" क्तातोसुन्कसुनः इन सूत्रों से की जाती है।

इनमें कुछ अव्यय पूर्वकालिक क्रिया को और कुछ क्रियार्थक क्रिया को बनाते हैं। उदाहरणार्थ प्रस्तुत हैं कुछ कृदन्तीय अव्यय—

| | | | | |
|---|---|---|---|---|
| पठित्वा | = | पढ़कर | = | पठित्वा व्रजति गृहम्। |
| शयित्वा | = | सोकर | = | शयित्वा उत्तिष्ठति। |
| पठितुम् | = | पढ़ने के लिये | = | पठितुं गच्छति। |
| हसितुम् | = | हँसने के लिये | = | हसितुम् उपक्रमते। |
| स्मारं स्मारम् | = | स्मरण कर करके | = | स्मारं स्मारं गुरोर्गिरो वर्तते। |
| आदाय | = | लेकर | = | आदाय पुस्तकं याति छात्रः। |
| प्रपठ्य | = | पढ़कर | = | प्रपठ्य पाठं गतो मैत्रः। |

विशेषः (i) कुछ अव्ययों का प्रयोग क्रियाविशेषण के रूप में होता है—

जैसे—शनैः शनैः चलति = धीरे धीरे चलता है।

अकस्मात् आगतः = अचानक आया।

चिरंगतो मे सखा = मेरा मित्र बहुत देर से गया है।

(ii) कुछ अव्यय संयोजक होते हैं—

जैसे—रामःश्यामश्च पठितुमागतौ=राम और श्याम पढ़ने आये हैं।

(iii) कुछ अव्यय भावाभिव्यञ्जक होते हैं—

जैसे—हन्त हन्त गतः कान्तो वसन्ते सखि नागतः।

CC-0. Sri Radha Krishna Samsthan, Delhi. Digitized by eGangotri

# नारी-स्तम्भः—

## पत्या श्रीरिव मोदते

डॉक्टर श्रीमती राजेश्वरीभट्ट
प्राध्यापिका, लालबहादुरशास्त्रीकालेज, जयपुरम्

( १ )

माता यस्य गृहे नास्ति भार्या चाप्रियवादिनी।
अरण्यं तेन गन्तव्यं यथारण्यं तथा गृहम् ॥

( ब्रह्मवैवर्तपुराण अ० २४ श्लोक १० )

नारी माता के रूप में सन्तति के चरित्र का निर्माण करने वाली है और पत्नी के रूप में अपने पति के गृह की लक्ष्मी है। नारी के ये दोनों ही रूप अत्यन्त श्लाघनीय हैं। जिसके घर में माता न हो तथा अनुकूल आचरण करने वाली एवं मधुरभाषिणी भार्या न हो उसका जीवन जीवन नहीं है उसका घर घर नहीं है। उसे तो वन में चले जाना चाहिए। मातृस्नेह एवं पत्नी प्रेम से वञ्चित पुरुष के लिए घर और जंगल में कोई भेद नहीं। घर घर नहीं होता भार्या ही गृह होती है उसके बिना घर जंगल से भी भयङ्कर होता है।

---

हा हतोऽस्मि।

धिक् मूर्खं विवेकरहितम्।

"स्वरादिनिपातमव्ययम्" इस सूत्र से उपसर्ग और निपातों की भी अव्यय संज्ञा होती है। किन्तु—उपसर्गों का प्रयोग स्वातन्त्र्येण नहीं होता है। इनका प्रयोग धातु से पहले होता है। उनके कारण धात्वर्थ में परिवर्तन होता है।

( क्रमशः )

CC-0. Sri Radha Krishna Samsthan, Delhi. Digitized by eGangotri

( २ )

पूजनीया महाभागा पुण्याश्च गृहदीप्तयः ।
स्त्रियः श्रियो गृहस्योक्ता स्तस्माद्रक्ष्या विशेषतः ।।

(महाभारत उद्योगपर्व अ० ३८ श्लो०)

स्त्रियां घर की लक्ष्मी कही गयी हैं वे पूजा के योग्य हैं, महा भाग्यशालिनी हैं, पुण्य को देनेवाली एवं घर की शोभा की अभिवृद्धि करने वाली हैं। अतः उनका विशेष आदर-सम्मान करना चाहिये तथा उनके गौरव की रक्षा करनी चाहिये।

( ३ )

पितृभिर्भ्रातृभिश्चैताः पतिभिर्देवरैस्तथा ।
पूज्या भूषयितव्याश्च बहुकल्याणमीप्सुभिः ।।

( मनुस्मृति अ० ३ श्लो० ५५ )

जिन्हें अपना कल्याण अभीष्ट है उनका यह कर्तव्य है कि वे चाहे पिता हो, भाई हो, पति हो अथवा देवर अपने घर की स्त्रियों का सम्मान करें उन्हें सुन्दर वस्त्रों एवं आभूषणों से सुसज्जित करें उन नारियों के आदर एवं सम्मान से देवगण भी प्रसन्न रहते हैं।

( ४ )

हितैषिता या पत्युः सा देवी त्वस्य कारणम् ।
प्रियकारित्वमात्रेण देवी शब्दो न लभ्यते ।।

( कथासरित्सागर आदि० १७ श्लो० ४५ )

पति का हित साधन करने से ही स्त्री को देवी कहा जाता है केवल प्रिय कार्य करने मात्र से नारी देवी पद को प्राप्त नहीं करती। पति का हित साधन ही नारी का प्रथम कर्तव्य है तभी वह देवी पद से विभूषित होती है जब वह हिताचरण में संलग्न रहती है।



CC-0. Sri Radha Krishna Samsthan, Delhi. Digitized by eGangotri

# ऊँची कीमतों के विरुद्ध युद्ध

## कम कीमतों में खरीदिये !

1. बैंड ( आल वर्ल्ड ) ट्रांजिस्टर 125/– रु. में ( गारंटी 2 साल ) ।
2. 'प्रैस्को' प्रैशर कुकर 125/–रु. में ( गारंटी 5 साल ) ।
3. 'रेनुका' मिक्सर-कम-ग्राइंडर 150/-, 230/- तथा 425/- रु. में (गारंटी 2 साल) ।
4. 'राजदूत' सिलाई मशीन 300/– तथा 350/– रु. में (गारंटी 5 तथा 7 साल) लोहे या प्लाई का कवर 40/– रु. अतिरिक्त ।
5. 'प्रिंस' सीलिंग फैन 320/–रु में ( गारंटी 5 साल ) ।
6. 'प्रिंस' टेबल फैन 310/– रु. में ( गारंटी 5 साल ) ।
7. 'नैशनल' टू-इन-बन 800/– रु. में ( गारंटी 2 साल ) ।
8. 'नैशनल' टेप रिकार्डर 400/– रु. में ( गारंटी 2 साल ) ।
9. 'पुरेवाल' हाथ की घड़ी [ पुरुष तथा महिला ] 150/– रु. में (गारंटी 2 साल) ।

1, 2 तथा 9 नं. वस्तुओं के लिये 30/– रु. एडवांस, 3, 4, 5 तथा 6 नं. वस्तुओं के लिए 75/– रु. एडवांस मनिआर्डर द्वारा मैनेजर को भेजिये । बकाया वी. पी. पी./बिल्टी/आर. आर. आर. की प्राप्ति के समय ।

**❁ गारंटी कार्ड वस्तु के साथ भेजा जायेगा ❁**

आप हमारे सेल्ज प्रोमोशन आफीसर बन कर 500/- रु. से 2000/– रु. मासिक अथवा इससे भी अधिक प्रतिमाह कमा सकते हैं । पूर्ण विवरण प्रोस्प्रैक्टस तथा आवेदन फार्म के लिये 6 रु. मनिआर्डर द्वारा मैनेजर को भेजें ।

**यूनिवर्सल ट्रेडिंग कारपोरेशन ( रजि० )**

16/126, गीता कालोनी, दिल्ली–110031


CC-0. Sri Radha Krishna Samsthan, Delhi. Digitized by eGangotri




# ५०-राजकुमारो भेकः [ तिब्बतदेशस्य श्रेष्ठकथा ]

"पद्म" शास्त्री
१२८ मुक्तानन्दनगर, गोपालपुरारोड, जयपुरम्-१५

पुरा कस्मिँश्चित्पर्वतशिखरे निर्धन-दम्पती प्रतिवसतः स्मः। कृषिकार्यं कृत्वा श्रमेणान्वितौ स्वकालं यापयतः परं तयोः सन्तानाभावो नितरां तुदति। एकदा तौ विचारयितुं लग्नौ, एकः सूनुरजनिष्यत्तर्हि कियत्सुखमभविष्यत्? अस्मद्वृद्धावस्थायां कृषिरक्षां कः करिष्यति? एवं सत्यहृदयेन दम्पती सरित्पर्वतदेवतानां प्रार्थनासु संलग्नौ। किञ्चित्कालानन्तरं पत्नी गर्भवती जाता। नवमे मासि सूनुरेकः समभवत्परं स भेकजातीयो न मनुष्य-जन्मा। वृद्धःप्राह किमनेन भेकेन करिष्याव? बहिर्निक्षिपाव। उदासीना पत्नी प्राह-विधातुर्नावयोरुपरि कृपा परं भेकश्चायमस्मत्सुतः त्यक्तुं न शक्यते चाधुना। गृहपृष्ठे निक्षिप्य किन्न-सुखी भवाव?

बहुत पहले किसी पर्वत पर निर्धन पति-पत्नी रहा करते थे। वे खेती करके परिश्रमपूर्वक अपना समय बिताते थे पर उन्हें सन्तान का अभाव दुःखी किये हुए था। एक बार वे विचार करने लगे, यदि एक लड़का हो जाता तो कितना अच्छा होता, बुढ़ापे में हमारी खेती की रक्षा कौन करेगा? इस प्रकार सच्चे हृदय से पति-पत्नी, नदी-पर्वत और देवताओं की प्रार्थना में लग गये। कुछ समय बाद पत्नी गर्भवती हुई। नवे महीने एक लड़का हुआ परन्तु वह मनुष्य न होकर मेंढ़क था। वृद्ध-पति ने कहा, इस मेंढ़क से क्या करेंगे? इसे बाहर फेंक आवें। उदास-पत्नी ने कहा, भगवान् की हम पर कृपा नहीं है परन्तु यह मेंढ़क हमारा लड़का है। इसे अब छोड़ा नहीं जा सकता। इसे घर के पीछे छोड़ कर सुखी क्यों न हो लें?

तद्वीक्ष्य भेकः प्राह-अहं मानवगृहे

यह देखकर मेंढ़क ने कहा, मैं मनुष्य

CC-0. Sri Radha Krishna Samsthan, Delhi. Digitized by eGangotri

समुत्पन्नः किञ्चित्कालानन्तरं मम रूपं मनुष्यवद् भविता। आश्यर्यचकितो तद्वीक्ष्य भेकःप्राह–अहं मानवगृहे समुत्पन्नः, किञ्चित्कालानन्तरं मम रूपं मनुष्यवद् भविता। आश्चर्यचकितो वृद्धः स्वपत्नीमाह–अद्भुतमेतद् यदयं मनुष्यवद् वदति। प्रसन्नेन भगवता चावयोः सुतः प्रदत्तः परं केनापि श्रापेण भेकः सञ्जातः।

के घर में जन्मा हूं, कुछ समय बाद मेरा रूप मनुष्य की तरह होगा। वृद्ध ने आश्चर्य-चकित होकर अपनी पत्नी को कहा—आश्चर्य है कि यह मनुष्य की तरह बोल रहा है। भगवान् ने प्रसन्न होकर हमें पुत्र दिया है परन्तु यह किसी श्राप से मेंढ़क बन गया।

त्रीणि वर्षाणि व्यतीतानि, भेकः-प्राह—मातः! मत्कृते रोटिकामेकां निर्मापय। अहं क्षेत्राधिपगृहं गत्वा कथयिष्यामि तवैकस्याः सुताया विवाहो मया सह कार्यः। तस्य तिस्रः कन्याः सन्ति, तासु या दयावती वर्तते सा मद्-गृहिणी भविष्यति। वृद्धा माता प्रोवाच त्वया सह कः स्वरूपसम्पन्नायाः पुत्र्या विवाहं करिष्यति? त्वं गच्छ, शिवास्ते पन्थानः सन्तु। इदमवधेयं यत्कोऽपि भृत्यः त्वां प्रेतं विभाव्य तवोपरि धूलिं न निक्षिपेत्।

तीन वर्ष बीत गये, मेंढ़कने कहा—माँ मेरे लिए एक रोटी बना दे। मैं जमीं-दार के घर जाकर कहूंगा कि अपनी एक लड़की का विवाह मेरे साथ कीजिए। उसकी तीन लड़कियाँ हैं, उनमें जो दयालु है वह मेरी स्त्री होगी। वृद्ध-माता ने कहा—तेरे साथ कौन अपनी सुन्दर कन्या का विवाह करेगा? तू जा, तेरे मार्ग-कण्याणकारक हों। यह ध्यान रखना कि कोई नौकर तुझे भूत समझकर तुझ पर धूल (राख) न डाल दे।

भेकः प्राह—मा शुचः, स वस्तुजातं नीत्वा प्रचलितः प्रासादं प्रति। तत्र प्राप्य स द्वारमताडयत् भृत्येनागत्य वि-लोकितम्। आश्चर्यचकितः सन् प्रो-वाच—स्वामिन्! द्वारिस्थः कोऽपि भेको भवन्तमाह्वयति। स्यात्सः कोऽ-

मेंढ़क ने कहा—सोच मत करो, वह मेंढ़क अपना सामान लेकर महल की ओर चल पड़ा। वहाँ पहुँच कर उसने दरवाजा खटखटाया। नौकर ने आकर देखा। आश्चर्यचकित होकर कहा—स्वामिन्! दरवाजे पर खड़ा कोई मेंढ़क आपको बुला

CC-0. Sri Radha Krishna Samsthan, Delhi. Digitized by eGangotri

पि प्रेतः। क्षेत्राधिपः प्राह—भेका जलेषु निवसन्ति, सम्भवति भेको वरुणादेवतायाः सन्देशमानीय वागतो भवेत्। पूर्वं दुग्धेन सत्क्रियतामयं तदनन्तरं द्रक्ष्याम्यहं यद् मद्राज्ये किमर्थमागतः सः। भृत्यस्तदुपरि दुग्धस्याभिषेकं कृतवान्।

क्षेत्राधिपः स्वयं तत्र गत्वा प्रोवाच—भगवन्! किं वरुणेन प्रेषितो भवान्? किमर्थमत्राद्यागमनेनात्मा क्लेशितः?। भेकः प्राह—नाहं वरुणस्य सन्देशवाहकः, स्वेच्छयैव भवत्पार्श्वमागतः। भवतां तिस्रः कन्याः सन्ति. एकस्या विवाहस्तासु मया सह कर्तव्यः तच्छ्रुत्वा भयद्रुताः सर्वे चिन्ताकुलाः सञ्जाताः।

अयं कोऽपि महानात्मा वर्तते, इति विचार्य तेन यथाविधिः स्वकन्याया विवाहो भेकेन सह कृतः। भेकोऽपि स्वगृहमागत्य भ्रातुश्चरणौ प्रणणाम। गृहस्थाश्रमे सुखेन संवसतस्तस्य बहूनि वर्षाणि व्यतीतानि। सः प्रत्यब्दं अश्वधावनक्रीडायां भागं जग्राह। द्वितीयवारमपि स तत्र समुपस्थितः। तस्य पत्नी तत्र तेन सहगताऽऽसीत् पितरावपि। सहसा पत्नी प्राह—मातः मच्छिरसि महती वेदना जायते। अहं गृहं-

रहा है। हो सकता है वह कोई भूत हो। जमींदार ने कहा, मेंढ़क जल में रहते हैं, हो सकता है कि मेंढ़क वरुण-देवता का कोई सन्देश लेकर आया हो। पहले दूध आदि से इसका सत्कार करो, इसके बाद मैं देखूँगा कि वह मेरे राज्य में क्यों आया है? नौकर ने उस पर दूध छिड़का।

जमींदार स्वयं वहां गया और कहने-लगा—भगवन्! क्या आपको वरुण ने भेजा है? आपने क्यों यहां आने का कष्ट किया?। मेंढ़क ने कहा—मैं वरुण का दूत नहीं हूं, अपनी इच्छा से ही आपके पास आया हूं। आपकी तीन लड़कियाँ हैं, उनमें से एक का विवाह मेरे साथ कर दीजिए। यह सुनकर सभी भयभीत तथा चिन्ता से व्याकुल हो उठे।

यह कोई महान् आत्मा है यह सोचकर जमींदार ने अपनी कन्या का विवाह, विधिपूर्वक उस मेंढ़क के साथ कर दिया। मेंढ़क भी विवाह करके जब घर आया, उसने अपनी माता के चरणों में प्रणाम किया। गृहस्थाश्रम में सुखपूर्वक रहते हुए बहुत वर्ष बीत गये। वह प्रतिवर्ष घोडों की दौड़ में भाग लेता था। दुबारा भी वह घुडदौड़ में ही शामिल हुआ। उसकी पत्नी भी उसके साथ गई हुई थी और माता-पिता भी। पत्नी ने अचानक कहा—हे माँ मेरे सिर में बहुत अधिक पीडा हो रही है। मैं घर जाना

CC-0. Sri Radha Krishna Samsthan, Delhi. Digitized by eGangotri

गन्तुमिच्छामि, मत्कृते वडवायाः प्रबन्धः कार्यः ।

वडवायामारुह्य सा वेगेन स्वगृहं प्रति चलिता । गृहं प्राप्य सत्वरं स्वपतिमन्वेष्टुमारब्धा । परं न कुत्रापि तं प्राप्तवती । कृतेऽप्यन्वेषणे सा स्वपतेश्चर्म दृष्टवती । सौभाग्यशालिन्यहं मत्पतिः श्रेष्ठश्चाश्वारोहः परं सः किमर्थं भेकस्य चर्म धारयति, इति विचिन्तयन्ती चर्मणि जातोद्वेगा, सा तच्चर्म दहनाय प्रोद्यता सञ्जाता । यदा सा चर्म ज्वालयितुमारेभे तदा सूर्यश्चास्तं गच्छन्नासीत् । सहसा तत्पतिः स युवा चाश्वमारुह्य मेघमिवोड्डीय तत्र प्राप । अश्वादवरुह्य चर्म त्रातुं सत्वरमेव प्राद्रुवत् परं चर्मणः पादमात्रमेवावशिष्टमासीत् । दीर्घं निश्वस्य प्रस्तरोपरि पपात ।

तत्पार्श्वमागत्य पत्नी प्राह—अश्वारोहेषु श्रेष्ठतमो भूत्वाऽपि भवान् भेकचर्म किमर्थं धारयसि ? पतिः प्रोवाच—त्वया न सम्यगाचरितम् नाहमधुना जीवनं धर्तुं क्षमः, पृथिव्या जनाश्च भविष्ये सुखिनो न भविष्यन्ति । नात्र तव दोष , ममानवधानेनैव सर्वमेतत्संघटितम् । नाहं साधारणो जनः, पृथिव्या मातुश्चाहं पुत्रः । किञ्चित्काला-

चाहती हूँ, मेरे लिए एक खच्चर का प्रबन्ध कर दो ।

खच्चर पर बैठकर, जल्दी जल्दी वह अपने घर की ओर चल पड़ी । घर पहुँच कर शीघ्र ही उसने अपने पति को ढूँढ़ना आरम्भ किया । परन्तु वह उसे नहीं पा सकी । बहुत खोज करने पर उसे अपने पति का चमड़ा ( मेंढ़क का चमड़ा ) मिला । मैं सौभाग्यशालिनी हूँ, मेरा पति श्रेष्ठ घुडसवार है परन्तु वह मेंढ़क की चमड़ी क्यों धारण करता है ? यह सोचती हुई उसे उस चमड़ी से नफरत हो गई, वह उस चमड़ी को जलाने को तैय्यार हो गई । जब उसने चमड़ी को जलाना आरम्भ किया तब सूर्य अस्त हो रहा था । अचानक उसका वह युवा पति घोड़े पर बैठकर, बादल की तरह उडकर वहाँ आ पहुँचा । घोड़े से उतर कर चमड़ी को बचाने के लिए शीघ्र ही भागा किन्तु चमड़ी का केवल एक पैर ही बचा था । लम्बी श्वास लेकर वह पत्थर पर गिर पड़ा ।

पत्नी ने उसके पास आकर कहा, घुड़सवारों में श्रेष्ठतम होकर भी आप मेंढ़क के चमड़े को क्यों ओढ़ते हो ? पति ने कहा—तुमने अच्छा नहीं किया, अब मैं जीवित नहीं रह सकता, पृथिवी के लोग भी भविष्य में सुखी नहीं हो सकते । इसमें तुम्हारा दोष नहीं है, मेरी असावधानी से ही यह सब कुछ घटना घटी है । मैं साधारण आदमी नहीं हूँ, मैं पृथिवीमाता

CC-0. Sri Radha Krishna Samsthan, Delhi. Digitized by eGangotri

न्तरमहं बलवान् भविता । भेकचर्मणा विना नाहं जीवितुं शक्नोमि । प्रत्यूषे नाहं जीवामि । अहमद्यैव रात्रौ स्वमातुः पार्श्वं गच्छामि ।

साश्रुमुखी पत्नी विललाप । अहं विश्वसिमि न भवान् मरिष्यति । युवकःप्राह—सत्यं यदि त्वं मां जीवयितुमिच्छसि तर्हि सुदुष्करं कार्यमेतत्कुरु, गच्छ, अश्वमारुह्य पश्चिमाशां तत्र गत्वा रक्तमेघोपरि वर्तते प्रासादो भगवन् मम त्रीणि कार्याणि सम्पादनी. यानि, प्रथमन्तु—जना निर्धना धनवन्तश्च न स्युः, सर्वे समानधनवन्तः स्युः । द्वितीयं—अधिकारिणो राजानश्च स्वाश्रितान् रक्षयेयुः । तृतीयं जनतायाः कृते राजमार्गाणां व्यवस्था भवेत् येन ते नगरेषु गत्वा स्वव्यापारं कर्त्तुं शक्नुयुः । यदि भगवान् तव प्रार्थनां श्रुत्वा प्रसीदन्ति तर्हि रात्रौ चाहं भेकचर्मणा विनाऽपि जीविष्यामि ।

अश्वमारुह्य सा तत्र प्रपेदे प्रार्थनाञ्च कर्त्तुमारेभे । शोकविह्वलां तां विलोक्य द्रवितो भगवान् तस्य त्रीणि कार्याणि परिपूरितवान् । प्रसन्ना सती

का पुत्र हूँ । कुछ समय बाद मैं बलवान् हो जाता । मेंढ़क की चमड़ी के विना मैं जावित नहीं रह सकता हूँ । प्रातःकाल मैं जीवित नहीं रहूँगा । मैं आज रात हा अपनी माँ के पास जाऊँगा ।

पत्नी के आंसू निकल रहे थे और वह विलाप कर रही थी । उसने कहा—मेरा विश्वास है कि आप नहीं मरोगे । युवक ने कहा-सचमुच ही यदि तू मुझे जिलाना चाहती है तो एक कठिन कार्य करो, घोड़े पर बैठकर पश्चिम दिशा की ओर जा, वहाँ जाकर लाल बादलों पर भगवान् का महल है । वहाँ प्रार्थना करना कि प्रातःकाल से पहले ही आप मेरे तीन काम कर दो । पहला काम है-लोग गरीब और अमीर न हों, सभी के पास बराबर धन हो । दूसरा काम है—अधिकारी और राजा अपने आश्रितों की रक्षा करें । तीसरा काम है—जनता के लिए सड़कों का निर्माण किया जाय जिससे वे नगरों में जा सकें और व्यापार कर सकें । यदि भगवान् तुम्हारी प्रार्थना सुनकर प्रसन्न हो लाते हैं तो मैं रात्री में मेंढ़क की चमड़ी के विना भी जीवित रह जाऊँगा ।

वह घोड़े पर बैठकर वहाँ पहुँची और प्रार्थना करने लगी । भगवान् को उस शोक-विह्वल स्त्री को देखकर दया आ गई और उसके तीनों काम उन्होंने पूरे कर

CC-0. Sri Radha Krishna Samsthan, Delhi. Digitized by eGangotri

सा सत्वरमेव स्वनगरमागत्य भगवत्कृतानि कार्याणि जनेभ्यः श्रावयामास। यदा स स्वगृहं प्रत्यागन्तुमिच्छति तदा तत्पिता दृष्टवान्। स प्राह पुत्रिके! तिष्ठ, कुत्र सत्वरं धावसि। सा ब्रूते क्षमस्व पितः! अत्यावश्यकं वर्तते ममाद्य प्रत्यूषात्प्राग् गृहगमनम्। पुनः सर्वं कथयिष्ये। परं पित्रा अश्वरज्जु गृहीता। सा भगवत्कृतानि त्रीणि कार्याणि पित्रे श्रावयामास।

दिये। वह स्त्री प्रसन्न होकर शीघ्र ही अपने नगर की ओर आई और भगवान् द्वारा किये गये तीनों काम लोगों को सुनाये। जब वह अपने घर लौट रही थी तब उसके पिता ने उसे देख लिया। उसने कहा—पुत्रि! ठहर, इतनी जल्दी-जल्दी कहाँ दौड़ रही हो? वह कहने लगी—पिताजी, अभी क्षमा करो, मेरा एक अत्यावश्यक कार्य है आज सुबह होने से पहले घर पहुँचना। इसके बाद सब कुछ कहूँगी। परन्तु पिता ने घोड़े की लगाम को मजबूती से पकड़ लिया। उसने भगवान् द्वारा किये गये तीनों काम, पिता को सुनाये।

विषीदन् पिता प्रोवाच, यदि निर्धनधनिकयो र्न कोऽपि भेद स्तर्हि मम महत्त्वं कः स्वीकरिष्यति? यदि स्वाश्रितानधिकारिणो रक्षयिष्यन्ति तर्हि क्षेत्रेषु कश्चास्मत्कार्यं विधास्यति? राजमार्गाणां निर्माणेन धनिकवर्गस्य लाभे न्यूनता भविष्यति। तत्पिता तां दृढं न्यबध्नात्। विवशा सा किंकर्तव्यविमूढ़ा भृशं शुशोच। झटिति प्रतोदेसम्प्रेर्य सा स्वगृहं प्रति धावितुं लग्ना।

पिता ने दुःखी होते हुए कहा, यदि गरीब और अमीर में कोई भेद न रहा तो मेरे महत्त्व को कौन स्वीकार करेगा? यदि अधिकारी अपने आश्रितों की रक्षा करेंगे तो हमारे खेतों में कौन काम करेगा? सड़कों के बन जाने से धनिकवर्ग के लाभ में कमी आ जायेगी। उसके पिता ने उसे मजबूती से बाँध रक्खा। वह विवश होकर किंकर्तव्यविमूढ़ होगई और बहुत अधिक सोच में पड़ गई।

परं प्रत्यूषः सञ्जातः। गृहं प्राप्य तया दृष्टः यत्तस्या पति मृंतः पितरौ-

लेकिन सुबह हो गया। घर जाकर उसने देखा कि उसका पति मर चुका है,

CC-0. Sri Radha Krishna Samsthan, Delhi. Digitized by eGangotri

# सूक्ति-सुधा

## तस्मात्पूज्यतयो गुरुः

डॉक्टर श्रीगङ्गाधरभट्टः
सह-आचार्यः, संस्कृतविभागे, राजस्थानविश्वविद्यालयः, जयपुरम्

( १ )

एकयेवाक्षरं यस्तु गुरुः शिष्यं प्रबोधयेत् ।
पृथिव्यां नाति तद्द्रव्यं यद्त्त्वा चानृणीभवेत् ॥
( अत्रिस्मृति-६ )

जो गुरु शिष्य को एक अक्षर देकर उसका ज्ञान बढाता है वह गुरु कहलाता है। अर्थात् अधिक ज्ञान प्रदान करने वाले गुरु का तो कहना ही क्या जो केवल एक अक्षर भी पढ़ाता है उस गुरु के ऋण से मुक्त होना सम्भव नहीं। संसार में ऐसी कोई वस्तु नहीं जिसे देकर के उस ऋण से उऋण हो सके।

परिदेवयाञ्चक्रतुः। सा स्वपत्युमृंत-शरीरे निपत्य भृशं विललाप, स्वपितरं मनसि निर्भर्त्सयन्ती किंकर्तव्यविमूढ़ा रोदितुमारब्धा। तत्पत्युः शरीरं समीपस्यैकस्याः विशालशिलायाः पार्श्वे परिजना निखातवन्तः। सा प्रत्यहं तत्र गत्वा रोदिति। किञ्चित्कालानन्तरं साऽपि तत्रैव प्रस्तरशिलारूपे परिवर्तिता, इति तिब्बतवासिनां विश्वासः।

माता-पिता विलाप कर रहे हैं। वह अपने पति के शव पर गिर गई और बहुत अधिक विलाप करने लगी, अपने पिता को मन ही मन कोसती हुई, किंकर्तव्यविमूढ़ होकर रोने लगी। उसके पति का शरीर समीप की शिला पर, उसके परिवारवालों ने गाड दिया। वह प्रतिदिन वहाँ जाकर रोती है। कुछ समय बाद वह भी वहीं पर पत्थर की चट्टान के रूप में बदल गई—यह तिब्बतवासियों का विश्वास है।



CC-0. Sri Radha Krishna Samsthan, Delhi. Digitized by eGangotri

Regd. No. 1379/51
R. J. No. 2617
Licence No. PP. 9.
Licence to Post Without Prepayment

# भारती

( २ )

तद्विद्धि प्रणिपातेन परिप्रश्नेन सेवया ।
उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्त्वदर्शिनः ।।

( गीता ४, ३४ )

विद्या ग्रहण करने के लिए गुरुओं को बार बार प्रणाम कर, ज्ञान की पिपासा के वशीभूत होकर गुरु से ज्ञानार्जन हेतु प्रश्न कर तथा उनकी यथाशक्ति खूब सेवा कर शिष्य गुरु को प्रसन्न करता है। वे तत्त्वज्ञानी गुरुजन उन्हें ज्ञान का उपदेश देते हैं वह उपदेश गुरु की कृपा से प्राप्त होता है जो शिष्य का मार्गदर्शक होता है। तथा वही उसका अभ्युदयकारी होता है।

( ३ )

यत्रात्मनो गुरोर्निन्दा क्रियते पापमोहितैः ।
तत्र कर्णौ पिधायैव स्थेयं शक्त्या गति र्न चेत् ।।

( मनु० २,२०० )

जहां पाप से मोहित दुर्जन एवं दुराचारी लोग अपने गुरु की निन्दा करते हों उसे रोकना चाहिये और यदि कुछ भी वश न चले तो वहां अपने कानों को अच्छी प्रकार बन्द करके बैठना चाहिये; अर्थात् यदि उस निन्दा को सुनकर उसके प्रतिकार या प्रतिवाद करने की शक्ति न हो और वहां से दूर जा भी न सकते हों तो अपने कानों को बन्द कर लेना चाहिये जिससे कि गुरुनिन्दा के वचन कर्णगोचर न हो सकें।

( ४ )

येन पृणात्युपाध्यायं तेन स्याद्ब्रह्मपूजितम् ।
मातृतः पितृतश्चैव तस्मात्पूज्यतमो गुरुः ।।

( महाभारत शान्तिपर्व १०८, २६ )

गुरु की सेवा शुश्रूषा करके उसे प्रसन्न करने से परब्रह्म परमात्मा की पूजा होती है। गुरु की पूजा ही परब्रह्म की पूजा के समान है। अतः गुरु माता, पिता आदि से अधिक पूज्य माना गया है। जगती पर पूज्य व्यक्तियों में गुरु का सर्वोत्तम स्थान है।

प्रकाशकः—संस्कृत प्रचार परिषद् राजस्थान,

पता—भारती भवन, बी. १५ न्यू कालोनी, जयपुर–३०२०१। दूरभाष–७५४६६

राधेश्याम द्वारा श्री शङ्कर आर्ट प्रिण्टर्स, त्रिपोलिया बाजार, जयपुर में मुद्रित। दूरभाष–६१७६७

CC-0. Sri Radha Krishna Samsthan, Delhi. Digitized by eGangotri